श्रीः ।

# परमसिद्धान्तः ।

(ब्रह्मांडकटाहांतर्गतज्योतिश्चक्रज्ञानम्)

श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविरचितः

सोऽयं

खेमराज श्रीकृष्णदास इत्यनेन

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९५३, शके १८१८.

# प्रस्तावना.

भूतलनिवासिनां सर्वेषां विदुषां पुरतो योऽयं ग्रन्थ उपस्थाप्यते, अस्याभिधानं च "परमसिद्धान्तः" इति । अयं ग्रन्थश्च विद्वद्वरश्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभमहाशयैर्नानाविधज्योतिःशास्त्रग्रन्थान्निर्मथ्य नवीनपाश्चात्यज्यौतिषिकपरिशीलितज्योतिश्चक्रविज्ञानं चातिनिपुणया बुद्ध्यावगाह्य सकलब्रह्माण्डकटाहान्तर्वर्तिगोलसमूहपरिमिति–व्यायाति–गति–स्थिति–देशज्ञान–प्रभृतिसर्वविषयसविस्तरविचारसरणिविभूषितो व्यरचि । एतेषां विद्वद्वर्याणामयं परिश्रमः कस्य सचेतसश्चेतश्चमत्कारं न गमयेत् । आर्यभट–भास्कराचार्य–प्रभृतिमहानुभावानां किल पंक्तिमर्हन्ति महान्तोऽमी पण्डितमण्डलाखण्डलायमानाः परावरज्ञाननिष्णाताः श्रीप्रेमवल्लभपण्डिता इति सानन्दं धन्यवादेन जोघुष्यते ।

सोऽयं "परमसिद्धान्त" नामा ज्योतिश्चक्रज्ञानप्रतिपादको ग्रन्थः पण्डितवरैर्विरच्य लोकोपकारायास्य प्रसिद्ध्ये मत्सविधे संप्रैष्यत । स चायं मया स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये मुद्रयित्वा प्रकाशमानीयत ।

अतः परमभ्यर्थयामि च सर्वाञ्ज्योतिर्विदो विदुषश्च–वास्तवतोऽमूल्यस्यापि परावरज्ञानप्रकाशकस्यास्य ग्रन्थस्य संग्रहाय पदं दत्वा प्रोक्तपण्डितानां सफलयन्तु भूरिपरिश्रमान् इति । शम् ।

सकलविद्वज्जनप्रेमाभिलाषी–

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" मुद्रणालयम्–मुम्बई.

श्रीः ।

अथ

# परमसिद्धान्तानुक्रमणिका ।

इति परमसिद्धान्ते गणितभागाधिकारः प्रथमः ॥ १ ॥

---

इति परमसिद्धान्ते खेटस्पष्टाधिकारः पंचमः ५



इति परमसिद्धान्ते खेटस्पष्टोत्पत्त्यधिकारः षष्ठः ॥ ६ ॥

इति परमसिद्धान्ते त्रिप्रश्नाधिकारोदशमः ॥ १० ॥



इति परमसिद्धान्ते यन्त्रांशपारिलेख्याधिकार एकादशः ॥ ११ ॥



इति परमसिद्धान्तेशृंगोन्नत्यानयनाधिकारोद्वादशः ॥ १२ ॥



इति परमसिद्धान्ते छायारात्र्यधिकारस्त्रयोदशः ॥ १३ ॥

इति परमसिद्धान्ते ग्रहणाधिकारे-चतुर्दशः ॥ १४ ॥



इति परमसिद्धान्ते पातयोगाधिकारः पञ्चदशः॥ १५॥

इति परमसिद्धान्तानुक्रमणिका समाप्ता ।

## ज्योतिषग्रंथाः ।

| | | | |
|---|---|---|---|
| २५८ | लीलावती सान्वय भाषाटीकाअत्युत्तम | १-८ | ०-३ |
| २५९ | बृहज्जातकसटीक * ........................ | १-८ | ०-४ |
| २६० | बृहज्जातकमहीधरकृतभाषाटीका अत्युत्तम | १-८ | ०-४ |
| २६१ | वर्षदीपकपत्रीमार्ग वर्षजन्मपत्र बनानेका | ०-४ | ०-॥ |
| २६२ | मुहूर्त्तचिंतामणि प्रमिताक्षरा रफ् रु. १ ग्लेज्. | १-८ | ०-३ |
| २६३ | मुहूर्त्तचिंतामणि पीयूषधारा टीका ........ | ३-० | ०-७ |
| २६४ | ताजिकनीलकंठीसटीकतंत्रत्रयात्मक .... | १-४ | ०-३ |
| २६५ | ताजिकनीलकण्ठी तंत्रत्रयात्मक महीधरकृत भा०टीका अत्युत्तम टैपकी छपी ............ | १-८ | ०-४ |
| २६६ | ज्योतिषसार भाषाटीकासहित ........ | १-० | ०-२ |
| २६७ | मुहूर्त्तचिंतामणिभाषाटीका महीधरकृत.... | १-० | ०-३ |
| २६८ | मानसागरीपद्धति *........................ | १-४ | ०-३ |
| २६९ | बालबोधज्योतिष........................ | ०-२ | ०-॥ |
| २७० | ग्रहलाघव सटीक * .................... | ०-१२ | ०-२ |
| २७१ | चमत्कारचिंतामणि भाषाटीका ........ | ०-४ | ०-॥ |
| २७२ | जातकालंकारभाषाटीका .................. | ०-६ | ०-॥ |
| २७३ | जातकालंकारसटीक........................ | ०-६ | ०-१ |
| २७४ | जातकाभरण ................................ | ०-१२ | ०-२ |
| २७५ | प्रश्नचंडेश्वर भाषाटीका .................. | ०-१२ | ०-१ |
| २७६ | लघुपाराशरी भाषाटीका अन्वय सहित .... | ०-३ | ०-॥ |
| २७७ | मुहूर्त्तगणपति *........................ | ०-१२ | ०-२ |
| २७८ | मुहूर्त्तमार्त्तंड ................................ | ०-१२ | ०-२ |

**पुस्तक मिलनेका ठिकाना—**

**खेमराज श्रीकृष्णदास.**

**"श्रीवेंकटेश्वर" छापाखाना—बंबई.**

# अथ परमसिद्धान्तः प्रारभ्यते.

ॐ श्रीगणेशायनमः दन्तीवक्त्रानन्नं नत्वा गणेशंदेव-
वन्दितम् श्रेष्ठंपरमसिद्धान्तं करोमि मनन प्रियम् १
यज्ञा वेदोदिताःयस्मात्स्युर्यज्ञाः समयाश्रयात् त-
त्कालंज्योतिषाधीनंवेदाङ्गंज्योतिषंततः २ शब्दशा-
स्त्रंमुखंतस्यतन्नेत्रंज्योतिषंमतम् निरुक्तंश्रवणंत-
स्यकल्पंवेदकरौमतं ३ शिक्षातन्नासिकाज्ञेयाछन्द
स्पादद्वयंमतम् हीनंनेत्र[1]द्वयंयस्य कर्णाद्यैःकिंपरा-
क्रमम् ४ भवत्यऽस्माद्द्विजःपूर्वंज्योतिषंप्रपठेत्ख-
लु तत्पश्चान्निजवेदाद्यं शास्त्रंतदऽखिलंपठेत् ५
गणितेनाऽखिलंकर्ममात्रमऽस्तियतस्ततः अस्मि-
न्परमसिद्धान्ते वक्ष्याद्यौ गणितांशकम् ६

## अथपरिभाषा.

गुञ्जाभिःपंचभिर्माषंते भूपैः कर्षमीरितं माषैर्वेदोन्मि
तैःसाणंतद्द्वयंकोलमुच्यते ७ कर्षोन्मितंसुवर्णंतु-

१ न्यासोपदेशान्मूकः सर्वंकरोतिकिमन्धः पाटीय गणितमेकाक्षिः गोलगणितस्त्वपर
नेत्रः अनयोर्मध्ये ह्ये कहीनस्तुकाण इत्युच्यते.

सुवर्णं समुदीरितम् कर्षैर्वेदमितैर्लोके पलमुक्तं विच
क्षणैः ८ गुञ्जाभिः षड्भिर्हैष्टंकं सेटं तैः षण्णवैर्मितम्
भूपांशं सेटकस्यैव षट्टंकं समुदीरितम् ९ सेटैः पं-
चोन्मितैस्तौल्ये पण्डितैर्धटिका स्मृता शून्यवेदमितैः
सेटैस्तत्तौल्ये मणमीरितम् १० रौप्यटंकमितं द्रम्मं-
निष्कं तन्मितहाटकम् मौल्ये भूपपणैर्द्रम्मं तैर्भूपैर्नि-
ष्कमीरितम् ११ अष्टभिस्तंडुलैर्गुञ्जा गुञ्जाऽर्द्धं यवं
मुच्यते त्रिगुञ्जं वल्लमाख्यातं तैरष्टैर्धरणोच्यते १२
भानुभिर्मुष्टिभिर्मानं तद्वेदैः प्रस्थ उच्यते तैर्भूपैश्चो-
दितं द्रोणं तद्भूपैः खारिका भवेत् १३ अंजलिर्मुष्टिभि
स्तैर्कैस्तद्द्वयं कुडवोच्यते तैर्वेदैर्नालिकां ताभिर् एवं
राढकोच्यते १४ तद्युगैर्भारमाख्यातं तत्पीडार्यैश्चकी-
र्त्तिता अष्टभिस्तिलविस्तारैर्यवविस्तारमीरितं १५
अष्टभिर्यवविस्तारैरंगुलं व्यासमीरितम् तैर्वेदाश्विस-
मैर्हस्तदैर्घ्यं हस्तमुदीरितम् १६ इत्थमंगुलविस्ता-
रमंगुलं समुदीरितम् हस्तैर्वेदमितैर्दण्डं हस्तैः अ-

स्वरवोरगैः १७ क्रोशः स्यात्क्रोशयुग्मन्तु गव्यूतिः परि-
कीर्त्तिता योजनञ्चाब्धिभिः क्रोशैर्वंशः स्याद्दशभिः क
रैः १८ क्षेत्रंवेदभुजैस्तुल्यैर्निबद्धकीर्त्तितंबुधैः विस्ता-
रे ह्येकहस्तः स्याद्दैर्घ्येचैककरस्तथा १९ वेधेत्वेकक
रस्तत्तु ह्येकहस्तं घनोच्यते एकहस्तघनो भाण्डोम-
गधेरवारिका भवेत् २० प्रसिद्धाल्लोकतोज्ञेया परिभा-
षायथोचिता इतिपरिभाषा.

## अथांकसंख्यासंज्ञा.

एको दश शत श्चाऽथ सहस्र स्त्वऽयुत स्तथा २१
लक्ष श्च प्रयुतः कोटि रऽर्बुद श्चाऽब्ज सञ्ज्ञकः खर्वा-
ख्य श्च निखर्व श्च महापद्माह्वयः किल २२ शंकु
र्जलधिसंज्ञश्च ह्यन्त्यमध्याभिधस्तथा परार्द्धचेतिवि-
ज्ञेयाश्चैतेंकाः दिग्गुणोत्तराः २३

## अथयोगान्तरकरणम्

योगोऽन्तरंयथास्थानंक्रमाद्वोत्क्रमतो भवेत् उदा-
हरणम्— दश पंच द्वादश शतानां योगं तदऽयुता

न्हीनंवद् न्यासः १०।५।१२।१०० एषांयोगेजातम्
१२७ इदमयुताद्धीनेजातं ९८७३.

## अथगुणनम्

[गुणयेत्]
गुणे नोत्सारितेनैव हन्याद्गुण्यंक्रमोत्क्रमात् २४
स्वेच्छयागुणखण्डैर्वाहत्वागुण्यंपृथक् पृथक् तदै-
क्यंवाभवेद्भक्तोगुणः शुद्ध्यतियेनच २५ तेनलब्ध्या
चतद्गुण्यंहत्वातज्जायतेथवा स्थानस्थैर्गुणकस्यै-
वह्यङ्कैः हत्वापृथक्पृथक् २६ गुण्यंकृत्वायथास्था-
नमैक्यंतज्जायतेथवा हत्वागुण्यंगुणेनैवहीष्टोनाढ्ये
नतत्फलम् २७ इष्टेनगुणितंगुण्यंयुक्ताहित्वातु-
वाभवेत् उदाहरणम्— [१२५] पंचार्क [१२] रविभिर्हत्वातद्भा-
[१२] नुभिर्भक्तावद् न्यासः गुण्यः १२५ गुणकः १२ गु-
णेनोत्सारितेनेतिकृतेजातं १५०० अथवा गुणख-
ण्डेकृते ५७ आभ्यांपृथक् [१२५] गुण्ये गुणिते युतेचजा
तंतदेव १५०० अथवा गुणकश्चतुर्भि र्भक्तोलब्धं ३
एभि [४] श्चतुर्भिश्च [१२५] गुण्येगुणितेजातंतदेव १५०० अ-

थवास्थानविभागेखण्डे १।२ आभ्यांपृथग्गुण्ये गु-
णितेयथास्थानयुतेचजातंतदेव १५०० अथवा चतु-
रूनेन ८ गुणेन चतुर्भिश्चपृथक् गुण्ये गुणितेयुतेच-
जातंतदेव १५०० अथवाद्वियुक्तेनगुणेन १४ गुण्ये
गुणिते द्विगुणित गुण्यहीनेच जातंतदेव १५०० इति-
गुणनप्रकारः **अथभागहारविधिः**

छेदः शुद्ध्यति भाज्याऽन्त्याद्यद्गुणस्तत्फलं भवेत् २८
केनाऽपवर्त्यतुल्येन छिद्भाज्यौ सम्भवे भजेत् उदाहरणं-
न्यासः भाज्यः १५०० भाजकः १२ भजनाल्लब्धोगुणः
१२५ अथवा भाज्यहारौत्रिभिरऽपवर्त्तितौ ५००/४ चतु-
र्भिर्वा ३७५/३ षड्भिर्वा २५०/२ स्वस्वहारभक्ताः फलंत-
देव १२५ वर्गरीतिः- स्वघ्नंवर्गोच्यते घनरीतिः वर्गो
मूलघ्नस्तु घनो भवेत् २९ वर्गोदाहरणम्— नवानां
विश्वतुल्यानां अष्टांकरामाणां पंचाभ्रेकखत्रयैका
णांवर्गान्वद न्यासः ९।१३।३९८।१०००१०५ एषां
यथोक्तकरणेनजाताः वर्गाः ८१।१६९।१५८४०४।

१०००२१०० ११०२५ पुनर्धनरीतिः तुल्यराशित्र-
यवधं गीयते तद्घनं बुधैः पुनर्वर्गरीतिः तुल्यराश्योस्तु
यद्घातं तद्वर्गं परिकीर्त्तितं ३० स्वोर्द्धस्थाप्याऽन्त्यव-
२ नाशयित्वा
र्गन्तु द्विघ्नाऽन्त्युघ्नान्तथाऽपरान् पीत्वाऽन्त्यन्तु ततो
दक्षिणतो १
त्सार्यदक्षञ्चैकस्थलाऽन्तरे ३१ इत्थं राश्यं ऽकपर्य्य-
योगः वर्गः
न्तं कृत्वा स्यात्तद्युतिः कृतिः प्रकारान्तरेण धनरीतिः
स्थाप्याऽन्त्यस्य घनं चाऽन्त्यवर्गस्त्र्याद्याहतं न्यसेत् ३२
एकस्थलाऽन्तरे दक्षे त्वादिवर्गाऽन्त्ययोर्वधं त्र्याहतं त
न्न्यसेद्दक्षे रूपदेशाऽन्तरे तथा ३३ स्थाने त्वादिघनं
दक्षे चैकदेशाऽन्तरे न्यसेत् तद्यथा स्थानसंस्थानां-
शतस्थानीयादि
योगं तत्र घनं भवेत् ३४ इत्थमेव त्रिदेशादिराशीनां
३।४।५।६।७।८।९।१०।११ वा. हस्तांकान्
जायते घनम् त्रिचतुःपूर्वराश्यादावऽन्त्यं तद्वामकान्स-
रेत् ३५ घनोदाहरणम् एकादीनां नवान्तानां तथा
नवघनस्य तथा पंचाब्धिभानां घनान्वद न्यासः १।२
३।४।५।६।७।८।९।७२९।२७४५ एषां क्रमे-
ण जाताः घनाः १।८।२७।६४।१२५।२१६।३४३

५१२।७२९।३८७४२०४८९।२०६८३६४३६२५

अथद्वितीयप्रकारेणनवघनघनपर्वंकाः ३७३२४८ १३५५६८ १७४६६ ७२९

एषांयोगंनवघन ७२९ घनं ३८७४२०४८९.

## अथवर्गमूलक्रमः

(वर्ग) (२)

त्यक्त्वाऽन्त्योजात्कृतिं द्विघ्नमूलेनाप्तंसमंफलम् मूल
पंक्तौलिखेल्लब्धवर्गमाद्योजतस्त्यजेत् ३६ स्यान्मूलंच
पुनर्द्विघ्नमूलेनाप्तंसमंत्विति उदाहरणम्- पूर्ववर्गाणां
मूलार्थंन्यासः ८१।१६९।१५८४०४।१०००२१००-
११०२५ क्रमेणलब्धानिमूलानि ९।१३।३९८।१०-
००१०५.

## अथघनमूलक्रमः

(आदिः)

प्राग्घनंद्वेऽघने चैवं हित्वाचाऽन्त्यघनाद्धनम् ३७पृ-
थक्मूलेनस्वघ्नेन त्रिघ्नेनाद्यंविभाजितम् लब्धंपं-
क्त्यांन्यसेल्लब्धवर्गघ्नंत्र्यन्त्याहतंत्यजेत् ३८ भाजिताद्या
च्चतस्याद्याद्धनाद्धित्वाघनंपदं (घनमूलं स्यात्) स्यात्पुनश्चपृथङ्मूल
वर्गात्रिगुणभाजितम् ३९ आद्यंलब्धफलंमूलपङ्क्तौ-
प्राग्वल्लिखेदिति उदाहरणम्-पूर्वघनानांमूलार्थंन्यासः

१।८।२७।६४।१२५।२१६।३४३।५१२।७२९।
३८७४२०४८९।२०६८३६४३६२५ क्रमेणल-
ब्धानिमूलानि १।२।३।४।५।६।७।८।९।७२९
।३७४५. अथभिन्नपरिकर्म्माष्टकम्

तत्रादौभिन्नयोगान्तरविधिः अहारेस्थापयेदेकंहा-
रंतद्भिन्नकर्म्मणि ४० भिन्नयोगान्तरेन्योन्यंराशी-
नामुभयोस्तथा हारांशौ भाजकेन घ्नौ स्वस्वहारांश
कंविना ४१ तुल्यछेदाःसमछेदौस्युःस्यातांसम्भवे-
सति अल्पितैरल्पिताभ्यांवाहारैश्छिद्यास्त्वमर्द्दितौ
४२ स्वांशंहारंविनाहारभागावेवपरस्परम् वाबहूनां
द्वयोस्तुल्यहारास्तुल्यहराविति ४३ तुल्यहारांशका
नांतुतुल्यहारांशयोस्तथा संयोगंवान्तरंकृत्वाहारा
संतत्फलंभवेत् ४४ तुल्यछेदविधौहारघातंस्वस्व-
हरोद्धृतम् स्वांशघ्नंस्वस्व भागंतुपरहारघ्नवद्भवेत्
४५ तत्रैक्यंवान्तरंहारघातासंतत्फलंभवेत् उदा-
हरणम्- पंचांशत्र्यंशयुग्मामंतथापादार्द्धौन्तरंवद

न्यासः $\frac{१}{५}$ $\frac{१}{३}$ $३$ अहारराशावेकंहारंदत्वा न्यासः $\frac{१}{५}$ $\frac{१}{३}$ $\frac{३}{१}$ उक्तवत्करणाज्ज्ञाताःसमछेदाः $\frac{३}{१५}$ $\frac{५}{१५}$ $\frac{४५}{१५}$ एषांयोगेजातं $\frac{५३}{१५}$ हरभक्तेजातम् $\frac{३८}{१५}$ न्यासः $\frac{१}{४}$ $\frac{१}{२}$ अनयोरन्तरेजातं $\frac{१}{४}$.

## अथभिन्नगुणनविधिः

द्विघ्नातासंचांशवधंस्याद्भिन्नगुणनेफलम् ४६ उदाहरणम्– सत्र्यंशोनैकेनाहतंसार्द्धदलेन घ्नंशारंवद न्यासः $\frac{११}{३}$ $१\frac{१}{२}$ सवर्णितेन्यासः $\frac{४}{३}$ $\frac{३}{२}$ गुणितेजातं $\frac{१२}{६}$ हरभक्तेजातं २ न्यासः $\frac{१}{२}$ $\frac{५}{१}$ गुणितेजातं $\frac{५}{२}$ हरभक्तेलब्धं $२\frac{१}{२}$.

## अथभिन्नभागहारविधिः

परिवर्त्यांशकंहारं हारस्याधोवधोद्धृतम् ऊर्ध्वघातंफलंभिन्नेभागहारविधौभवेत् ४७ उदाहरणं– सत्र्यंशैकोद्धृतंयुग्मंतथाखाश्विपादांशकमर्द्धोद्धृतंवद. न्यासः $\frac{४}{३}$ $\frac{२}{१}$ भाज्यः $\frac{२}{१}$ भाजकः $\frac{४}{३}$ भजनाल्लब्धो-लब्धिः $\frac{३}{२}$ न्यासः भाज्यः $\frac{२०}{४}$ भाजकः $\frac{१}{२}$ भजनाल्लब्धं

१०/१ अथ भागांशांशविधिः

छिद्घातासंचांशवधमंशांशांशफलं भवेत् उदाहरणम् – निष्कस्यार्द्धस्यत्र्यंशस्ययुग्मपादांशकौवदखाषानांषोडशांशंचत्वेकस्याद्धोंद्धृतंवद न्यासः १/१ १/२ १/३ ३/४ उक्तवज्जातं १/२ न्यासः ८०/१६ १/२ सवर्णिते जातं १६०/१६ हरभक्ते जातं १०

अथ भिन्नवर्गादिविधिः

घनेवर्गे घनौवर्गौपदे प्राग्वद्धरांशयोः ४८ उदाहरणम् – सत्र्यंशैकस्यवर्गंतत्पदंतद्घनंतन्मूलंब्रूहिन्यासः ४/३ वर्गः १६/९ मूलं ४/३ अस्य घनं ६४/२७ तन्मूलं ४/३

अथ स्वभागानुबंधस्वांशापवाह्योर्विधिरुच्यते.

स्वांशाढ्योनेनधःस्थेनहारंहन्याद्धरेणच स्वांशाढ्योनेनतेनांशान्हन्यात्तस्यात्सवर्णितः ४९ उदाहरणं- अंघ्रिर्निजार्द्धसंयुक्तस्तत्वस्वत्रिलवान्वितोच्यतां युग्मपंचांशो निजाष्टमांशोनोततः स्वचतुर्भिः सप्तमांशैर्हीनोवद अर्द्धं निजाक्षाष्टांशयुक्तंतन्निजांघ्रिहीनमुच्यताम् न्यासः १/४ १/२ १/२   २/५ १/८ ४/७   १/२ ५/८ १/४ सवर्णिता जाताः

६/१२ २१/१४० ३५/६४ अथापरोदाहरणम् एकस्यरुद्रां-
शकेनोनेनैकचतुःषष्ट्यंशकेननिजेनहीनंसप्तति
मुच्यतांन्यासः ७०/१ ०१/६४ ०१/११ यथोचितकरणायन्यासः
६४/१ ०१/११ यथो- चितंन्यासः ७०/१ उक्तवत्स-
वर्णितेजातम् ४८४४०/७०३ अथान्यदु- ०११/७०३ दाहरणं-
निजसार्द्धतृतीयांशोनखांकंवद न्यासः ६०/१ ०१/३ १/२
यथोचितंन्यासः ६०/१ उक्तवत्सवर्णितंजातं
१५/१ अन्यदुदा ०५/६ हरणम् निजसार्द्धतृतीयांशे-
नयुग्माढ्येनहीनंखांकंवद न्यासः ६०/१ २/१ यथात्र
युग्मंहीनं पृथक्स्थाप्यउक्तवत्स ०१/३ १/२ वर्णितं
जातं १५/१ हरभक्ताल्लब्धम् १५ युग्मंपृथक्स्थापि-
तंहित्वाजातम् १३

## अथशून्यपरिकर्म्माष्टकम्

खढ्यंखोनंसमंखस्यवर्गादौखंखभाजितः राशिः
शून्यहरोज्ञेयोखघ्नःखंजायतेथवा ५० शून्यहा-
रेखनिघ्नश्चचिंत्यंशेषविधाविति यत्रनास्तिहरंत-

न्नज्ञेयंशून्यहरंबुधैः ५१ तत्रैवविन्यसेदेकंछेदंशू-
न्यहरस्थले एवमेवगुणाभावेशून्यंगुणकमुच्यते
५२ तत्रशून्यगुणस्थानेगुणमेकंतुविन्यसेत् उदा-
हरणम् — रूपहीनंचरूपाढ्यंखंख वर्गंचतत्पदम्
घनंघनपदंखस्यख घ्नः पंचोन्मितंवद पक्षंखेनो-
द्धृतंब्रूहिखघ्नः स्वार्द्धसमन्वितः पक्षघ्नंखहृतंत
र्कंजातंकस्तत्समुच्यताम् न्यासः ० एतदेकहीनं
जातम् १।० एकयुतंजातं १ खस्यवर्गं० मूलं०
घनं०तन्मूलं०न्यासः५एतेखेनगुणिताःजाताः० न्यासः
२ एतौखभक्तौ २ यदज्ञातोराशिस्तस्यगुणः०
स्वार्द्धक्षेपः $\frac{1}{2}$ गुणकः २ हारंशून्यं० दृश्यम् ६
ततोवक्ष्यमाणेनविलोमविधिना इष्टकर्म्मणावा-
लब्धोराशिः २ इतिशून्यपरिकर्माष्टकम्.

## अथव्यस्तविधिरुच्यते.

गुणभाजकयोर्वर्गमूलयोस्वर्णयोर्मिथः ५३ व्य-
स्तंकृत्वाहितदृश्येप्राग्राशिर्जायतेखलु स्वांशा-

ढ्योनेतु भागाढ्योनो हरस्तु हरो भवेत् ५४ भागस्त्व विकृतः कार्य्यं व्यस्तेतच्छेषमुक्तवत् उदाहरणम्-यस्त्रिघ्नोनिजयुग्मचरणान्वितस्त्रिभक्तः तत्स्वार्द्धोनस्तस्य वर्गस्त्रिनियुक्तस्ततपदं द्वि भक्तं लब्धमेकं चेत्प्रथमं वद न्यासः गुणः ३ क्षेपः $\frac{३}{४}$ भाजकः ३ ऋणं $\frac{१}{२}$ वर्ग धनं ३ मूलं हरः २ दृश्यम् १ व्यस्तेनयथोक्तकरणेन प्राग्राशिर्जातिम् $\frac{४}{३}$

## अथ धनर्णपरिकर्माष्टकम्

तत्रोर्ध्वबिन्दुनाऋणचिह्नं ज्ञेयम् ऋणयोर्धनयोर्योगंयोगे स्याद्विवरेन्तरम् ५५ धनर्णयोश्च विश्लेषेयोगंयोगेन्तरम्भवेत् ऋणयोर्धनयोर्घातं धनं स्याद्भजनंधनम् ५६ स्याद्दृणं स्वर्णयोर्घातं स्वर्णयोर्भजनं क्षयम् उदाहरणम्- युग्मतर्कयोर्धनयोस्तथाऋणयोर्योगंचान्तरं घातं घाताद्गुणभक्तात्फलं वद न्यासः २।६ योगं ८ अन्तरं ४ बधं १२ गुणभक्ताल्लब्धं ६।२ न्यासः ६̊।२̊ योगं ८̊ अन्तरं ४̊ वधं

१२ गुणभक्ताल्लब्धं ६।२ न्यासः २।६ योगः ४
अन्तरं ८ वधं १२ गुणभक्ताल्लब्धं ६।२ न्यासः
२।६ योगं ४ अन्तरं ८ वधं १२ गुणभक्ताल्लब्धं
६।२

## अथस्वर्णवर्गविधिः

स्ववर्गस्वर्णयोः स्वस्वमूले स्वर्णेयथोचिते ५७ मू-
लंनास्तित्ववर्गत्वा दृणावर्गस्यतस्यच उदाहरणं-
धनस्यरूपद्वयस्यतथाऋणस्यरूपद्वयस्यवर्गं-
ब्रूहि द्वयोरूपोत्रणीतः न्यासः रूपं २ रूपं २ जा-
तौवर्गौ रूपवर्गः ४ रूपवर्गः ४ मूलेरूप २ रूप २
मृणवर्गः ९ तन्मूलं०

## अथस्वर्णशून्ययोगान्तरविधिः

खवधेरवोनेसमंस्वर्णंखाद्दूनंव्यस्तमीरितम् ५८
उदाहरणार्थम्- न्यासः रूपं २ रूपं २ रूपं० यो-
गमन्तरंचाविकृतं रू २ रू २ रू० एतानिखादू
नानिजातानि रूपं २ रू २ रू०

## अथखण्डवर्गविधिः

स्यात्खण्डयोर्वधंद्विघ्नंखण्डवर्गैक्ययुक्कृतिः उदाहरणम्- षड्विहीनयुगानांचवर्गंब्रूहि विचक्षण न्यासः ४।६ जातोवर्गः १६ खण्ड ४।६ योर्वघं २४ द्विघ्नंजातंशेषं ४८ रूपं ३६ सर्वयोगाद्दशानां १० वर्ग १००समंभवतिवर्गः १६ शेषं ४८ रू ३६ प्राग्वन्मूलयो ४।६र्वधं २४ द्विघ्नंशेषाद्धित्वामूलंस्यादेवंमूलं ४।६

## अथेष्टकर्मविधिरुच्यते

तत्प्रश्नविधितुल्येष्टराशिः क्षुण्णोहृतोथवा ५९ राश्यंशैर्वायुतोहीनोदृष्टघ्नेष्टमनेनतु भक्तंस्यात्पूर्वराशिश्चेद्वौपक्षौयत्रतत्रतु ६० इत्थंहारान्तरेणासमिष्टघ्नदृश्ययोस्तथा विश्लेषमेकमानंस्यात्तस्माद्धेयोनुपाततः ६१ उदाहरणम्- वेदघ्नः स्वत्रिभागोनो भूपभक्तः समन्वितः राशेरर्द्धाब्धिषड्भागैः कोराशिर्विश्वसम्मितः न्यासः गुणः ४ स्वत्रिभागहीनः $\frac{१}{३}$ हरः १६ राश्यंशाः $\frac{१}{२}$ $\frac{१}{४}$ $\frac{१}{६}$ दृश्यं १३ कल्पितमिष्टं ३ वेदघ्नः १२ स्वत्रि भागहीनः जातम् ८

भूपभक्तः $\frac{१}{२}$ कल्पितेष्टराशेरर्द्धाब्धितकंशैः $\frac{३}{२}$ $\frac{३}{४}$ $\frac{३}{६}$ युतोहरोजातः $\frac{१३}{४}$ इष्ट ३ घ्नदृश्य ३९ मनेना $\frac{१३}{४}$ संप्राप्तराशिः १२ अथद्वितीयोदाहरणम् - पुंजार्द्ध स्वत्र्यंशाद्यंवनभेदेगतं षष्ठंनिजसमांशाढ्वनघांत- त्राष्टांशः स्वनवांशाढ्यास्थितः रवेयाताः वेदहंसाश्चे- त्पुञ्जेसर्वान् हंसान्वद न्यासः $\frac{१}{२}$ $\frac{१}{६}$ $\frac{१}{८}$ / $\frac{१}{३}$ $\frac{१}{७}$ $\frac{१}{९}$ दृश्यं ४क्र- मेणसवर्णनं द्वाभ्यामपवर्त्ति- $\frac{२}{३}$ $\frac{४}{२१}$ $\frac{५}{३६}$ तं एषांयो गः $\frac{२५१}{२५२}$ इदंकल्पितैके १ ष्टादूनंकृत्वा शेषं $\frac{१}{२५२}$ अनेनासंकल्पितैके १ ष्टघ्नदृश्यं ४ जाताराशौहंस- संख्या १००८ तृतीयोदाहरणं-राशेस्त्र्यंशाक्षांश षष्ठान्पृथक्तान् दत्वाशेषं गोमितंब्रूहि राशिम् न्या- सः $\frac{१}{३}$ $\frac{१}{५}$ $\frac{१}{६}$ दृश्यं ९ उक्तवत्करणाज्ज्ञातोराशिः ३०

## अथेष्टकर्म्मणिशेषजातिविधिः

छिद्दृश्यघातमंशोनछिद्धातासंफलम्भवेत् शेषजा- तिविधौसिद्धिर्वाव्यस्तेनेष्टकर्म्मणा ६२ उदाहरणं- स्वार्द्धदेवालयेशेषाद्युग्मत्र्यंशोगुरोर्गृहे शेषस्या-

ईदृहे दत्वा शिष्टं युग्मोरविलंवद् न्यासः [१/२ २/३ १/२] दृश्यं
२ यथोक्त करणेन जातं सर्वधनं २४ अथवा तदेव न्या-
सः [१/२] दृश्यं २ अत्र रूप १ मिष्टराशिं प्रकल्प्य भागाप
वाद [२/३] विधिना स्वांशाढ्योनेत्वधस्थेन हारं हन्याद्धरेण
चे- [१/२] त्यादिना सवर्णिते जातं १/२ अनेन इष्टा १ हृतं
दृष्टं २ भक्तं जातं सर्व धनं २४ अथ विलोम विधिनान्या-
सः [२/१] स्वांशहीनेन्यासः [२/१] अथ भागानुबंधेन जातं
स- [१/२] वंधनं २४ अथे- [१/१] ष्टकर्म्मणि विश्लेषजात्यु-
दा- [२/३] हरणम् पंचांश- [२/१] श्यंशौ तयोस्त्र्यन्तरा न्वरा
शेः [१/२] [१/१] पृथक् पृथग्धृत्वा रूपशेषं १ चेद्राशिं वद् न्यासः
[१/५ १/३ २/५] दृश्यं १ जातो राशिः १५ सर्वे ते व्यस्तेनापि सि
ध्यन्ति अथ द्विपक्षजात्युदाहरणं त्रिशेषमेकस्य धनं
षडश्वाः दशाश्वास्त्वपरस्य तुल्यमौल्या ऋणं तथा शेष
शतं तथा च तस्य तौ तुल्य धनौ चेदेकाश्वमौल्यं वद यदा द्यध-
नस्य राशामन्य धनं धनं शेषं ऋणं तथात्राहि अत्राश्व
मौल्यमज्ञातं तस्य मानं कल्पितमिष्टं ३ अनुपातेन चेदेका

श्वस्येदं ३ मौल्यं ३ तदाषण्णां मौल्यं १८ एवं दशाश्वानां मौल्यं ३० कल्पितेष्ट ३ शेषौ दृश्यौ च ९। १५̇ शोधनार्थं न्यासः

| | | |
|---|---|---|
| १८ | दृश्य | ९ |
| ३० | दृश्य | १५̇ |

यावत् १८ तावत् ३० रूपं ९ रूपं १५̇ यथात्रानयो १८। ३० रन्तरेण १२ संदृश्ययो ९। १५̇ रन्तरं २४ लब्धमेकाश्वस्यमौल्यं २ पुनरनुपातेनषण्णां मौल्यं १२ शेषा ३ दृश्वमाद्यस्य धनं १५ एवं दशानां मौल्यं २० शेषं ५̇ युतं १५ जातमन्य धनं च १५ अथान्य न्यासः

| | | |
|---|---|---|
| १८/५ | दृश्यं | ९/५ |
| ३० | दृश्यं | ५१̇ |

अत्राप्यनयो (१८/५ । ३०/१) रन्तरेण १३२/५ संदृश्ययो

| | |
|---|---|
| ९/५ | ५१̇/१ |

रन्तरं

| |
|---|
| २६४/५ |

लब्धमेकाश्वस्यमानं २ प्राग्वत्तयोर्धने १५। ३ अथवा आद्यधनादन्यं त्रिगुणं तच्छेषस्वं तत्वं २५ चेत्तयोर्धने वद अत्राद्यधनादन्यधनं त्रिगुणोक्तस्तर्हि आद्यं त्रिगुणीकृत्य कल्पितेष्टवशान्न्यासः

| | | |
|---|---|---|
| ५४ | दृश्य | २७ |
| ३० | दृश्य | ७५ |

पक्षयो ५४। ३० रन्तरेण २४ संदृश्ययो २७७५ रन्तरं ४८ लब्धमेकाश्वस्यमौल्यं २ तथा षण्णां मौल्यं १२ शेषं ३ युतं १५ जातं प्रथम धनं २५ एवं द्वितीय धनं ४५

अथान्यदुदाहरणं एकनरस्यरत्नानि माणिक्यानिपंचा-
नि ५ नीलान्यष्टौ ८ मौक्तिकानिसप्तमितानि ७ रत्नमानी-
तशेषंधनंखांकमितं ९० अन्यनरस्यरत्नानिसप्तमाणि-
क्यानि ७ नवनीलानि ९ षण्मौक्तिकानि ६ रत्नमानीत
शेषंधनं द्विषष्टि ६२ मितं तौतुल्यस्वौचेद्रत्नमौल्यान्व-
दकल्पितमिष्टं ३ कल्पितंइष्टं २ कल्पितं १ अनुपातेन-
पक्षौन्यासः

| मा | नी | मौं | |
|---|---|---|---|
| १५ | १६ | ७ | द्रव्यं ९० |
| मा | नीं | मौ | |
| २१ | १८ | ६ | द्रव्यं ६२ |

(१५।१६।७) अत्राद्यैक्यं ३८ परे- (२१।१८।६) क्यं ४५
(९०।६२)
योरन्तरेण ७ संकल्पितेष्ट १ धनद्रव्ययोरन्तरं २८ ल-
ब्धमेकस्यमौल्यं ४ चेदेकस्येष्ट १ स्येदं ४ एषां ३ लब्धं
मौल्यं १२ पुनरेकस्यमाणिक्यस्येदं १२ चेत्पंचमाणि-
क्यानां मौल्यं ६० एवं प्रथमपक्षेमौल्यानि मा ६०। नी ६४। मौ २८
शेषाद्यमेषांयोगं २४२ आद्यस्यसर्वधनं २४२ एवम-
न्यस्यापियथा १ एकमाणिक्यस्येदं १२ चेत्सप्तमाणि-
क्यानां मौल्यं ८४ एवंद्वितीयपक्षेमौल्यानि मा ८४। नी ७२।
मौ २४ एषामैक्यं १८० शेष ६२ युतं २४२ जातं द्वितीय

धनंच २४२ एवमिष्टवशाद्बहुधा समधनं भवति अ-थान्यदुदाहरणं एकोवदतिदेहि शतंत्वद्व्यान्मेद्विघ्नो भवति अपरोपिच दशंमांदेहित्वद्व्यान्मेषड्गुणो भ-वतितयोर्धनेवद अत्राद्यापरयोः कल्पितेष्टे धने न्यासः

| | | |
|---|---|---|
| २ | ह | १०० |
| १ | ह | १०० |

अनयोः परस्य शतं गृहीते आद्यो द्विगुणि-तः स्यादित्येकोलापो घटते अथाद्याद्दशापनीय दश-भिः परधनंयुतं षड्गुणंस्यादिति आद्यं षड्गुणीकृत्यन्या-सः

| | | |
|---|---|---|
| १२ | ह | ६६० |
| १ | ह | ११० |

अतः प्राग्वल्लब्धमेक १ स्यमानं ७० एकेन यं ७० चेद्द्वाभ्यां १४० इदं सद्दशयं शेषमादि धनं ४० एवमन्यधनं १७०

## अथ धनर्णैक जातिराशीनामन्तरकर्म

स्वर्णानामेक जातीनां भेदे लघ्वधिकाल्लघुं हित्वातदधि कंशेषयुक्तं स्वोर्ध्वान्त्यजेदिति ६३ यथारवि तिथिश्रु तिपिण्डाना १२।१५।२२।२८ मन्तराच्छेषमग्नि ३ मितं भवति.

## अथ संक्रमण विधिः

योगंतु द्व्यन्तरेणोनयुक्तं कृत्वाततोर्द्धितौ स्यातामस्या

धिकौराशीतौतत्संक्रमणं भवेत् ६४ उदाहरणं ययो-
र्योगंनखंवेदमन्तरंतौराशीवद न्यासः योगं २० अंतरं
४ राशी १२।८

## अथ विषम कर्म विधिः

राश्योर्घातेयुगघ्नेचराश्योर्योगकृतेस्तयोः कृत्वा भेदं भवे-
द्राश्योरन्तरस्य कृतिस्तयोः ६५ राश्योर्वर्गयुतौ कृत्वा
राश्योर्योगकृतेस्तथा भेदं राश्योस्तयोर्ज्ञेयं द्विघ्न घातस-
मंखलु ६६ वर्गान्तरं भवेद्राश्योस्तयोर्योगान्तराहतिः
घातेद्विघ्नेतयोर्भेद वर्गयुक्तातयोस्तथा ६७ राश्योर्व-
र्गयुतिस्तत्तु विज्ञेया गणकोत्तमैः अन्तरेणोद्धृतंवर्गभे-
दंयोगमुदीरितम् ६८ राश्योर्योगकृतौराश्योर्घातंवे-
दाहतंबुधैः हित्वाचान्तरवर्गः स्याद्वर्गैक्ययुतिवर्गयोः
६९ विश्लेषस्यदलंराश्योर्घातमुक्तंविचक्षणैः उदा
हरणं भुजाश्रून्नात्पदं व्येकं कोटिकर्णान्तरं यदि य-
त्रतत्र भुजंकोटिं कर्णंब्रूहि विचक्षण अत्र कोटिक-
र्णान्तरमिष्टं २ अतोव्यस्तादाद्भुजः १२ इष्टं २ सैकं ३

वर्गः ९ त्रियुतः १२ वर्गः १४४ अयंकोटिकर्णवर्गा-
न्तरं १४४ तयोर्योगान्तरघातसमं १४४ इष्टः २ को-
टिकर्णान्तरेण २ भक्तभयं १४४ जातं ७२ अयंयोगः
७२ अन्तरेण २ ऊनयुक्ते अर्द्धितेजातौकोटिकर्णौ ३५।
३७ इष्टवशाद्बहुधा भुजकोटिकर्णाः स्युः अथापरो-
दाहरणं खाब्धिदोः कोटिकर्णैक्यंकोटिबाहुवधंतथा
खार्कंयत्रभुजंकोटिंकर्णंतत्रोच्यतांखलु अत्रभुज-
कोटिवधो १२० द्विघ्नः २४० तद्युतिवर्गस्यवर्गयोगस्य
चान्तरं २४० यद्भुजकोट्योर्वर्गयोगः सखंकर्णवर्गः
अतोदोः कोटियुतिवर्गस्य कर्णवर्गस्यचान्तरमिदं २४०
योगान्तरघातसमं २४० अतइदमन्तरं २४० योगेना
४० संलब्धं ६ दोः कोटियुतिकर्णान्तरं ६ अनेनयुक्तो-
नेर्द्धितेयोगेजाते दोः कोटियोगकर्णौ २३ । १७ दोःको-
टियोगः २३ कर्णः १७ दोःकोटियुति २३ वर्ग ५२९
चतुर्गुणघातोने ४८० शेषंदोः कोटयंतरवर्गः ४९
मूलं ७ इदंकोटिभुजान्तरं ७ भुजकोटियोगे २३ यु-

युक्तोनार्द्धेकृत्वाजाते भुजकोटी १५।८ भुजः १५ कोटिः ८

## अथ किंचिद्वर्गकर्म्म

इष्टवर्गगजैर्निघ्नंव्येकार्द्धमिष्टभाजितं ७० एकः स्यात्तत्कृतेरर्द्धं सैकं राशिः परो भवेत् वर्गयोगान्तरेव्येके राश्यो स्यातांकृतीतयोः ७१ उदाहरणं वर्गयोगान्तरे व्येके मूलदेतौ ययोर्वद कल्पितमिष्टं $\frac{१}{२}$ अस्यकृतिः $\frac{१}{४}$ अष्टगुणोजातः २ अयंव्येकः १ दलितः $\frac{१}{२}$ इष्टेन हृतः जातः प्रथमोराशिः १ अस्यकृतिः १ दलिता $\frac{१}{२}$ सैका $\frac{३}{२}$ अयमपरोराशिः $\frac{३}{२}$ एवमेतौराशी | $\frac{१}{१}$ $\frac{३}{२}$ | एवमेकेनेष्टेनजातौ $\frac{७}{२}$ $\frac{१७}{८}$ द्विकेनेष्टेन $\frac{३१}{४}$ $\frac{९९३}{३२}$

## अथ मूल गुण विधिः

गुणघ्नपदयुक्तोनराशेरर्द्धगुणस्यच वर्गेणयुक्त दृष्टस्यमूलमर्द्धगुणेनहि ७२ ऊनंवाढ्यंततोवर्गं प्राग्राशिर्ज्ञायतेखलु चेदंशोरूनयुक्तः स्यादंशोरूनयुतेनच ७३ एकेनगुणकं दृश्यं भक्त्वाताभ्यांततोन्त्कवत् उदाहरणं राशेः सप्तगुणमूलार्द्धेनाद्युग्मशेषंचेद्राशिंवद न्यासः

मूलगुणः $\frac{7}{2}$ दृश्यं २ अर्द्धगुणस्य वर्गेण $\frac{49}{16}$ युक्तस्य
दृष्टस्य $\frac{81}{16}$ मूलं $\frac{9}{4}$ अर्द्धगुणेन $\frac{7}{4}$ ऊनत्वादाढ्यं $\frac{16}{4}$
वर्गीकृतं जातो राशिः १६ उदाहरणं त्रिगुणैर्निजमूलै
र्युतः दिक् को राशिर्भवति न्यासः गुणः ३ दृश्यं १० गुणा
र्द्ध $\frac{3}{2}$ वर्गेण $\frac{9}{4}$ युक्तस्य दृ. १० ष्टस्य $\frac{49}{4}$ मूलं $\frac{7}{2}$
अर्द्धमूलगुणे $\frac{3}{2}$ युक्तत्वादूनं $\frac{4}{2}$ वर्ग ४ राशिः ४
उदाहरणं राशेर्मूलद्वयं दत्वा राशेरष्टांशकं पृथग्दत्वा
शेषं युग्मोन्मितं धनं चेत्सर्वस्वराशिं वद न्यासः गुणः २
त्रिगुणाष्टांशः $\frac{3}{8}$ अथवाष्टमांशत्रयः $\frac{1}{8}$ $\frac{1}{8}$ $\frac{1}{8}$ दृः
श्यं २ एकोनां $\frac{3}{8}$ शेनाने $\frac{5}{8}$ न दृश्यं २ मूलगुणं च २ भ
क्ता दृश्यं $\frac{16}{5}$ मूलगुणं $\frac{16}{5}$ अर्द्धगुण $\frac{8}{5}$ वर्ग $\frac{64}{25}$
दृश्या $\frac{16}{5}$ ढ्यं जातं $\frac{144}{25}$ मूलं $\frac{12}{5}$ गुणार्द्धेन $\frac{8}{5}$ ऊन
त्वादाढ्यं ४ वर्गो राशिः १६ उदाहरणं द्रव्यस्य राशेः
पादांशमूलं राशितश्चाष्टमांशाद्यं दत्वा शेषं युग्मं चेद्रा
शिं वद न्यासः गुणः $\frac{1}{4}$ अत्र राशेः पादांशमूलगुणं
$\frac{1}{4}$ तर्हि दृश्यं २ पादांशं $\frac{1}{2}$ दृश्यं ज्ञेयं $\frac{1}{2}$ भागाः $\frac{6}{8}$

प्राग्वज्जातौगुणहृद्‌यौ १२ गुणः १ हृद्‌यः २ प्राग्व-
ज्जातंराशिचतुर्थांशं ४ एतच्चतुर्भिर्गुणितंजातोद्रव्य-
राशिः १६ उदाहरणं त्रिभिःस्वमूलैर्युतंस्वपादाढ्यं
चेदंशंजातंचेद्राशिंवद न्यासः भागः $\frac{1}{4}$ मूलगुणः ३
हृद्‌यं ११ अत्र एकेनां. $\frac{1}{4}$ शेनाढ्येन $\frac{5}{4}$ मूलगुणंहृ-
द्‌यंच भक्त्वा ताभ्यांप्राग्वज्जातोराशिः ४ .

## अथ त्रैराशिकाद्योजराशिकविधिः

फलयोर्हारयोश्चापिह्यन्योन्यंपरिवर्त्तनं ७४ पक्षयो
रुभयोः कृत्वात्वल्पराशिवधोद्धृतम् बहुराशिवधंज्ञे-
यंफलंस्याद्योजराशिके ७५ बहुराशिवधेस्वल्पराशि
घातेतथैवच राशिमण्डलसंख्याया बिज्ञानेनोच्यते-
हरः ७६ राशिस्तत्रोच्यते राशिः फलएवाथकथ्यते
राशिर्वधविधौहारः पक्षयोरुभयोरपि ७७ तत्रोज-
राशिके ऽज्ञातस्थाने सर्पाकृतिंलिखेत् आदेःफलं
यथांशः स्यात्तथांशः परपक्षजं ७८ यद्गुणांशाऽधि
कंवाऽल्पंस्यात्फलंपूर्वपक्षजं तद्गुणांशाऽधिकंवाऽल्पं

स्यात्तस्मात्परपक्षजं ७९ इच्छाद्युत्थफलौयत्रस्या-
तांतुल्यकुलेगतौ तत्रादि फलयोरेव परिवर्त्तनमाचरे-
त् ८० इच्छायाः प्रथमस्यापिसर्वत्रैक कुलं भवेत् नी-
चवंशप्रमाणेन नीचराशिहरं बुधैः ८१ हत्वातन्नी
चराशिस्तत्तद्युच्चजातिः प्रजायते आदिराशेः फलं
त्वन्यजातिर्मध्येस्थितंतयोः ८२ इच्छाहृतंफलंवादि
भक्तमिच्छाफलंभवेत् एतत्त्रैराशिकंवादिनिघ्नमि
च्छोद्धृतंफलं ८३ इच्छातोत्थंफलंव्यस्तेज्ञेयंत्रैराशि
के खलु च्छेदं यत्र भवेत्तत्रज्ञेयंव्यस्तोजराशिकं ८४
यत्रेच्छावर्द्धनाल्लब्धेर्न्यूनत्वंजायतेथवा ह्रासवृद्धि
फलेज्ञेयंव्यस्तंव्याद्योजराशिकं ८५ प्रकारान्तरेण
वाद्यन्यपक्षयोस्तिर्य्यक् संस्थयोः परिवर्त्तनं केवलंफ-
लयोः कृत्वानपृथक्तत्रहारयोः ८६ अन्योन्यंतुलतो
भक्तास्वल्पराशिवधेनहि आधिराश्याहृतिंलब्धंतदि
च्छाफलमुच्यते ८७ त्रैराशिकोदाहरणं द्रम्मद्व
येन सेटं लभ्यते चेत्सार्द्धत्रयेणद्रम्मेणकिंलभ्यते त्या-

सः | २ ७/२ | १ | फलंपरिवर्त्यन्यासः | २ ७/२ | १ | अत्रबहुराशि | १ । ७/२ | वधं | ७/२ | लघुराशि | २ | वधेन २ भक्तं लब्ध ७/४ हरभक्तंजातं पादोनद्वयसेटकं | १ ३/४ | अथवा स्मिन्न्यासेराशीत्रयंतस्मात्त्रैराशिकेणंन्यासः | २ । १ । ७/२ | अत्रआदिः २ आदेः फलं १ इच्छा ७/२ इच्छाहतं फ- लं ७/२ आदिभक्तंइच्छाफलं ७/४ प्रकारान्तरेण | २ । १ ७/२ । ६ | फलंपरिवर्त्यन्यासः | २ । ६ ७/२ । १ | बहुराशि | ७/२ । १ | वधं ७/२ स्वल्पराशि | २ । ६ | वधेन २ भक्तं लब्धमिच्छा फलं ७/४ अथवान्यासः | २ । १ । ७/२ । ६ | फलंपरिवर्त्य- न्यासः | २ । ६ ॥ ७/२ । १ | बहुराशि | ७/२ १ | वधं ७/२ ल- घुराशि | २ । ६ | वधेन २ भक्तमिच्छाफलं ७/४ अथ वान्यासः | २ ७/२ १ १ १ | हारंफलं परिवर्त्यन्यासः | २ । ७ २ १ १ | बहुराशि | ७ । १ । १ । १ | वधं ७ स्वल्प- राशि | २ । २ । २ | वधेन ४ भक्तं जातं फलं ७/४ अत्रद्रम्म- द्वयस्यहारं १ एकसेटकस्य हारंचाप्येकः १ कल्पितः पुनस्त्रैराशिकोदाहरणम् वस्त्रद्वयस्यमोल्यंनिष्कंचे

त्रिनिष्कैः कत्यम्बराणिलभ्यंते न्यासः | २/१ ३ | अ-
त्रेच्छाफलयोरेकजातित्वादाद्यंफलंपरिवर्त्यन्यासः
| १/२ ३ | प्राग्वत्फलंपरिवर्त्यन्यासः | १ ३/२ | उक्तव-
ल्लुब्धस्वरूपमानं ६ पुनरपित्रैराशिकोदाहरणं ये-
जीवा अष्टसेटकमन्नं चतुर्भिर्दिनैर्भक्षन्ति तेदशसे
टकमन्नंकत्युन्मितैर्दिनैर्भक्षंतिन्यासः | ८/४ १० | उ-
क्तवल्लुब्धाः दिवसाः ५ अथपुनरपित्रैराशिकोदाह-
रणंचतुर्थं सपादैकचत्वारिंशद्भिर्द्रम्मैरूयंगसेटक-
६३ ममलघृतमानीतं तत्सकपटंकृत्वातन्मध्येसक
पटैकसेटकस्यमौल्यंनवपणंजातंचेत् सर्वस्मिन्घृतेकृ
तकपटसेटान्तक्रादिन्वद् न्यासः द्रम्माः घृतमौल्यं-
| ४१ १/४ | घृतसेटकानि ६३ नवभिः पणैः सकपटमे-
कसेटकमितं घृतंलभ्यतेचेत् सर्वघृतस्यमौल्यपणैः
किमितिन्यासः | ९/१ ६६० | लब्धंसकपटंसर्वघृतं
| ७३ १/३ | अस्मिन्सुनिष्कपटंघृतं ६३ हित्वाशेषंक
पटं | १० १/३ | तक्रं किंवातैलं दुग्धंदधिः किम्वापानीयं

किंवा कदलीफलम् अथवाऽस्यामान्नभक्तं वापरिपा-
चितपिण्डालुकादिकम् अथव्यस्तत्रैराशिकोदाहरणं
वर्षत्रयस्यप्राणेमौल्यंतर्कंचेन्नन्दाब्दस्यप्राणेमौल्यंवद
न्यासः | ३ ९ / ६ ~ | प्राग्वद्बहुराशिवधः १८ लघुराशि
| ~ ९ | वधे९ भक्तः लब्धंमौल्यं२ अथवान्यासः
| ३।६।९ | अत्रादिः ३ फलम् ६ इच्छा ९ व्यस्तत्रैरा-
शिकत्वादादि ३ हतंफलं ६।१८ इच्छा ९ भक्तंफलंमौ
ल्यंजातं २ पुनर्व्यस्तत्रैराशिकोदाहरणं कस्मिन् चि-
द्राशिंत्रिभिर्भक्त्वा तर्कफलंचेत् नवभिर्भक्ता किम्फ-
लंभवेत् न्यासः | ३ ।९ / ६ ~ | प्राग्वल्लब्धं २ पुनरपिव्य
स्तत्रैराशिकोदाहरणम् यद्वस्तु द्वादशजीवाः त्रिभि
र्दिनैर्भक्षंति तद्वस्तु वेदोन्मिताः जीवाः कतिदिवसैर्भ-
क्षंति न्यासः | १२ ४ / ३ ~ | फलं ३ हारं ४ चपरिवर्त्यन्या-
सः | ४ १२ / ~ ३ | उक्तवत्करणाल्लब्धं ९ अथापरोदा-
हरणं यत्कर्म्म द्वादशनरास्त्रिभिर्दिनैः कुर्वन्ति तंकर्म्म
वेदोन्मिताः मनुष्याः कतिदिवसैः कुर्वन्ति न्यासः | १२ ४ / ३ ~ |

प्राग्वत्फलं ९ अथपंचराशिकोदाहरणं मासेरवाक्षे न्तरं युग्मं वर्षेऽक्षे किं तथान्तरं न्यासः

| | |
|---|---|
| १ | १२ |
| ५० | ५ |
| २ | ~ |

प्राग्वन्मिथः पक्षयोः फलं परिवर्त्त्यन्यासः -

| | |
|---|---|
| १ | १२ |
| ५० | ५ |
| ~ | २ |

बहूनांराशीनां [१२।५।२] वधः १२० लघुराशि [१।५०।~] वधेना ५० ऽसः लब्धंतथान्तरं [१२/५]

अथप्रकारान्तरेणन्यासः [१।५०।२ / १२।५।~] फलंपरिवर्त्त्यन्यासः [१।५०।~ / १२।५।२] बहूनांराशीनां १२।५।२ वधः १२० लघुराशि १।५०।~ वधेन ५० भक्तस्तदिच्छाफलम् [१२/५] वान्यासः [१।५०।२॥१२।५।~] फलंपरिवर्त्त्य न्यासः [१।५०।~॥१२।५।२] बहूनां [१२।५।२] वधं १२० स्वल्पराशि [१।५०।~] वधेन ५० भक्तंलब्धमिच्छा फलं [२ ३/५] अथकालज्ञानार्थंन्यासः

| | |
|---|---|
| १ | ~ |
| ५० | ५ |
| २ | १२/५ |

फलंपरिवर्त्त्यन्यासः

| | |
|---|---|
| १ | ~ |
| ५० | ५ |
| १२/५ | २ |

बहूनांराशीनां [१।५०।१२/५] वधः १२० लघुराशि ५।२ वधेन १० भक्तः लब्धामासाः १२ अथमूलधनार्थंन्यासः

| | |
|---|---|
| १ | १२ |
| ५० | ~ |
| २ | १२/५ |

फलंपरिवर्त्त्यन्यासः

| | |
|---|---|
| १ | १२ |
| ५० | ~ |
| १२/५ | २ |

प्राग्वल्लब्धंमूलं-

धनं ५ अथव्यस्तपंचराशिकोदाहरणं वेदसेटकवस्तुषोडशाजीवा एकस्मिन्दिने भक्षंतिचेत्सेट द्वयवस्तु वस्रुमिताः कत्युन्मितदिनै र्भक्षंति न्यासः

| | |
|---|---|
| ४ । २ | |
| १६ । ८ | |
| १ । ~ | |

फलं हारंच परिवर्त्य न्यासः

| | |
|---|---|
| ४ | २ |
| ८ | १६ |
| ~ | १ |

प्राग्वल्लब्धंदिनं १ पुनर्व्यस्तपंचराशिकोदाहरणं रसंख्यासंद्विलब्धंचेद्दशांपंचोद्भूतंवद न्यासः

| | |
|---|---|
| ६ | १० |
| ३ | ५ |
| २ | ~ |

फलंहारंपरिवर्त्य न्यासः

| | |
|---|---|
| ६ | १० |
| ५ | ३ |
| ~ | २ |

उक्तवल्लब्धं २ अथपंचराशिकोदाहरणं दशजीवाः विंशद्दिनैश्चत्वारिंशन्मितंसेटं मणंवावस्तु भक्षंतिचेत्पंचोन्मिताः जीवास्तिथिभिर्दिनैः कतिमितवस्तं भक्षंति न्यासः

सेर ४० वासेर १६०० वामण ४०

| | |
|---|---|
| १० | ५ |
| २० | १५ |
| ४० | ~ |

फलंपरिवर्त्य न्यासः

| | |
|---|---|
| १० | ५ |
| २० | १५ |
| ~ | ४० |

उक्तवल्लब्धं १५ अथसप्तराशिकोदाहरणं विस्तारेत्रिकरैस्तुल्याः दैर्घ्येवेदोन्मिताः करैः येवस्त्राः भास्करास्तेषांमौल्यंरवाज्वोन्मितं यदि विस्तारेषण्मिताः हस्तैः दैर्घ्येनागोन्मिताः करैः येवस्त्राः षण्मिताः स्तेषाम्मौल्यंब्रूहि विचक्षण न्यासः

| | |
|---|---|
| ३ | ६ |
| ४ | ८ |
| १२ | ६ |
| १० | ~ |

उक्तवल्लब्धं मौल्यं २० अथवा विस्तारदैर्घ्य ३।४ घातं १२ एक वस्त्रस्य क्षेत्रफलं १२ द्वादश १२ गुणितं १४४ द्वादशवस्त्राणां क्षेत्रफलं १४४ एवं परपक्षे वस्त्राणां क्षेत्रफलं २८८ ततस्त्रैराशिकेण यथास्य १४४ मौल्यं १० चेत् २८८ मौल्यं किमिति न्यासः

| | |
|---|---|
| १४४ | २८८ |
| १० | |

लब्धं मौल्यं २० अथवा त्रैराशिकद्वयेन पंचराशिकफलं त्रैराशिकत्रयेण सप्तराशिकफलं त्रैराशिकचतुष्केण नवराशिकफलं त्रैराशिकपंचकैरेकादशराशिकफलं षड्भिस्त्रैराशिकैस्त्रयोदशराशिक फलमित्यादिकं भवति अथ नवराशीको उदाहरणं या नीष्टिकानि: विस्तारेत्वष्टभिश्चांगुलैस्समा दैर्घ्ये सूर्यांगुलैस्तुल्या वेधेवेदांगुलैस्तथा द्रम्मैः षोडशभिस्तानि लभ्यन्ते चेच्छतानिहि विस्तारेंगांगुलैस्तुल्या दैर्घ्ये शक्रांगुलैस्तथा वेधे पंचांगुलैस्तुल्या व्योमाब्धीनीष्टिकानि च द्रम्मैः कत्युन्मितैर्ब्रूहि लभ्यन्ते सत्वरं बुध न्यासः

| | |
|---|---|
| ८ | ६ |
| १२ | १४ |
| ४ | ५ |
| १०० | ४० |
| १६ | |

उक्तवल्लब्धं मौल्यं द्रम्माः ७ अथैकाद- श

राशिकोदाहरणं विस्तारेष्टांगुलैर्दैर्घ्ये द्वादशैरंगुलैस्समाः वेधेवेदांगुलैस्तुल्यास्तौल्ये सेटद्वयोन्मिताः द्रम्मैर्नागोन्मितैः पट्टालभ्यन्ते शून्यदिङ्मिताः एवंशक्रांगुलैर्दैर्घ्ये विस्तारेंगांगुलोन्मिताः वेधेपंचांगुलैस्तुल्यास्तौल्ये सेटत्रयोन्मिताः पट्टाःखाब्धिमिता द्रम्मैर्लभ्यन्ते कियदुन्मितैः न्यासः

| | |
|---|---|
| ८ | ६ |
| १२ | १४ |
| ४ | ५ |
| २ | ३ |
| १०० | ४० |
| ८ | ~ |

लब्धंमौल्यंद्रम्माः ५ १/८ अथत्रयोदशराशिकोदाहरणं दैर्घ्येऽर्कांगुलैस्तुल्याः विस्तारेष्टांगुलैस्समाः पिण्डेचाब्ध्यंगुलैस्तुल्यास्तौल्येसेटद्वयोन्मिताः येपट्टाःषष्टिभिस्तुल्यास्तेषामानयनायह्रि भाटकंषट्पणाश्चेत्तु यद्देशे क्रोशपंचके दैर्घ्येशक्रांगुलैस्तुल्या विस्तारेंगांगुलैस्तथा पिण्डे बाणांगुलैस्तुल्यास्तौल्येसेटत्रयोन्मिताः येपट्टाः खाब्ध्यंयस्तेषांभाटकंयोजने कियत् न्यासः

| | |
|---|---|
| ८ | ६ |
| १२ | १४ |
| ४ | ५ |
| २ | ३ |
| ६० | ४० |
| ५ | ४ |
| ६ | ~ |

लब्धाः भाटकेपणा ५ १/४ पणानांद्रम्मकरणरीतिः पणानांतुहरंभूपैर्हृत्वा स्युर्द्रम्मजातिगाः तेपणाएवमखिलाः

न्थि द्रम्मानाः स्युरुत्कुलाः ८८ अत्रव्यस्तसप्तराशिका द्युदाहरणानिविस्तारभयान्नलिखितानि

## अथ भाण्डप्रतिभाण्डकविधिः

मिथोवस्त्वर्जनेवस्तोः पक्षयोः परिवर्त्तनात् च्छेदयोः फलयोर्व्यस्तेत्वव्यस्तेमौल्ययोरपि ८९ अल्पराशिव धान्संस्याद्बहुराशिवधंफलं उदाहरणं द्रम्मेणाम्रा- ष्टकंयत्रपणेनदाडिमद्वयं लभ्यन्ते केवलाम्रेण लभ- न्तेकतिदाडिमाः न्यासः

| | |
|---|---|
| १६ | १ |
| ८ | २ |
| १ | |

मौल्यंफलंपरिवर्त्य न्यासः

| | |
|---|---|
| १ | १६ |
| ८ | २ |
| | १ |

उक्तव लब्धानिदाडिमा- नि ४ पुनरुदाहरणंव्यस्तं दिग्भिर्द्रम्मैः षोडशाब्दस्यतुरगोलभ्यते स्वाश्विभिर्द्रम्मैर्वेदाश्वि- वत्सरास्त्रीप्राप्नोतिचेत् वेदमिताब्देन तुरगेण कतिव र्षमितास्त्रीप्राप्नोतितद्वद न्यासः

| | |
|---|---|
| १० | २० |
| १६ | २४ |
| ४ | |

व्यस्त- त्वात् केवलंपक्षयोः फलंपरिवर्त्य न्यासः

| | |
|---|---|
| १० | २० |
| १६ | २४ |
| | ४ |

उक्तवत्करणात्फलं १२ वर्षास्त्री यथाव्य- स्तत्रैराशिकेण ४ वर्षतुरगस्यमौल्यं ४०

त्रैराशिकेण २० द्रम्मैः २४ वत्सरास्त्री लभ्यतेचेत् ४० द्रम्मैः कतिवत्सरास्त्री इति २०।२४ घातं ४८० द्रम्म ४० भक्तंफलं १२ वर्षास्त्री.

## अथमिश्रव्यवहारः

मानकालहतं मानंमिश्रकालाहतं फलं ९० मिश्रघ्नेतैतदैक्याप्तेस्यातामूलकलान्तरे स्यादिष्टकर्म्मजंमूलंमिश्रेह्रित्वा कलान्तरं ९१ उदाहरणं पञ्चकेनशतेनब्देमूलंस्वंसकलान्तरं षोडशंचेत्पृथक्ब्रूहितत्रमूल कलान्तरे न्यासः

| | |
|---|---|
| १ | १२ |
| १०० | १६ |
| ५ | ~ |

लब्धेक्रमान्मूल कलान्तरे १०।६ अथवा एकं १ मूलधनमिष्टंप्रकल्प्य १ तस्यवर्षेकलान्तरंजातं ३/५ मूलधनैवेष्टोर्ध्वंजातं ८/५ अनेनाप्तं इष्ट १ घ्नदृश्यं १६ लब्धंमूलधनं १० मिश्रा १६ हूनंफलं ६ कलान्तरं ६.

## अथमिश्रान्तरविधिः

स्वल्पमानफलेनाप्तं बहुमानफलंफलं कृत्वैकेनाऽयुतं तेन भक्त्वाहीष्टकृतिंफलं ९२ अन्यमूलधनंज्ञेयं

सिष्टवर्गोऽन्वितं फलं आद्यमूलधनं तुल्ये काले तुल्ये-
फले ययोः ९३ उदाहरणं पंचकशतेन दत्तं यत्फल
वर्गोनं तद्दशकशतेन दत्तं तुल्यः कालः फलं च तयोः य-
थात्र बहुमितिफलं १० लघुमितिफलेनाप्तं २ एकोने-
ना १ सं इष्ट ४ वर्ग १६ लब्धमन्यस्य धनं १६ इदं १६
इष्ट ४ वर्ग १६ युतं जातं प्रथम धनं ३२ अतो जराशि
केण कालः मासाः $\frac{५}{२}$ फलं च ४ द्विकेनेष्टेन २ अ-
न्यधनं ४ प्रथमधनं ८ कालः मासाः ५ फलं कला-
न्तरं २ उदाहरणं एककशतेन दत्तं यत्फल वर्गोनं त-
त्पंचकशतेन दत्तं तुल्यः कालः फलं च तयोः अत्रापि
लघु १ फलाप्तं बहु ५ फलं लब्धं ५ अनेनैकोनेना ४
समिष्ट २ वर्ग ४ लब्धं १ द्वितीयधनं १ इदं १ इष्ट २
वर्गा ४ढ्यं प्रथमधनं ५ समकालः मासाः ४० फलं च
२ एवमिष्टवशाद्बहुधा.

## अथ मिश्रान्तरविधिः

योगान्तरे विलोमेन स्यातां प्राग्वत्तयोर्धने उदाहरणम्

पंचकशतेनदत्तं यत्फलवर्गाढ्यंतद्दशकशतेनदत्तंतु-
ल्यःकालः फलंचतयोः अत्रापिलघु ५ फलासंबहु १०
फलं २ अनेनैक १ युतेना ३ सं ३ इष्ट ३ वर्ग ९ लब्धं
मन्यधनं ३ तदिष्ट ३ वर्गे ९ हित्वा ६ प्रथमधनं ६ कालः
मासाः १० फलंच ३ इष्टवशाद्बहुधा स्युः तथामिश्रा
न्तरविधिः इष्टोत्थस्यसमूलस्य फलस्येष्टाहतेगुणे ९४
भेदंतेनाप्तमिष्टघ्नद्रव्यंमूलधनं भवेत् उदाहरणं पंचक
शतेनदत्तंमूलं सकलान्तरं गतेवर्षे द्विगुणंषोडशहीनंल-
ब्धं मूलंधनंवद न्यासः द्रव्यं १६ गुणं २ अत्रमूलधनं
इष्टः ३ इष्ट ३ घ्नगुणं ६ द्रव्यंच ४८ अतःपंचराशि
केण

| | |
|---|---|
| १ | १२ |
| १०० | ३ |
| ५ | |

लब्धमिष्टे ३ कलान्तरं $\frac{९}{५}$ एतन्मू-
ल- धना ३ढ्यं $\frac{२४}{५}$ अस्यगुणे ६ न्तरे-
णा $\frac{६}{५}$ संद्रव्यं ४८ लब्धंमूलधनं ४० कलान्तरंच-२४
अपरोदाहरणं पञ्चकशतेनदत्तंमूलं सकलान्तरम्
वेदाब्दैस्त्रिगुणंयुगाधिकं लब्धं मूलंसमाचक्ष्व अत्र
एके १ नइष्टेन प्राग्वच्चतुर्षुवर्षेषु कलान्तरं $\frac{१२}{५}$ मूला १

द्रव्यं $\frac{१७}{५}$ अस्येष्ट१घ्नगुणे ३न्तरं $\frac{३}{५}$ तेना $\frac{३}{५}$ संइष्ट१

घ्नहृदयं४ लब्धं मूलधनं १० कलान्तरंच २४

## अथमिश्रांतरविधिः

स्वस्वमानहृताः स्वस्वकालाः स्वस्वफलोद्धृताः ९५ का-

लैः स्वस्वगतैराप्तास्तेमिश्रघ्नाः पृथक् पृथक् लब्धियो-

गोद्धृता युक्तखण्डा भिन्ना भवन्तिहि ९६ उदाहरणं

एकपंचत्रिकशतैर्दत्तं खण्डै स्त्रिभिर्नरवं खण्डान् षट्

द्व्यक्षमासेषुतुल्यमासं फलंवद न्यासः | १ । ६ — १०० — १ | | १ । २ — १०० — ५ |

| १ । ५ — १०० — ३ | मिश्रधनं २० क्रमाज्ज्ञातानि खण्डानि १०।६

।४ पंचराशिकेणतेषां सम कलान्तरं | $\frac{३}{५}$ | $\frac{३}{५}$ | $\frac{३}{५}$ |

अथ मिश्रान्तररीतिः स्युः फलानि पृथक् क्षेपाः मिश्र-

घ्नाः स्वैक्यभाजिताः उदाहरणं एकस्यत्रिमितंद्रव्यं-

द्वितीयस्याक्षभिर्मितं तृतीयस्यांगतुल्यंचेत्तदैक्यवणि-

जात्फलं युग्मवेदोन्मितंलब्धंतेषांलब्धिं पृथग्वद न्यासः

क्षेपाः ३।५।६ मिश्रधनं ४२ जातानिधनानि ९।

१५।१८ एतानिस्वस्वादिधनैरूनानिलाभाः ६।१०।१२

अथमिश्रान्तररीतिः यातक्षणफलानिस्युः क्षेपाः प्राग्वत्ततः क्रमात् ९७ उदाहरणं एकद्वित्रिषुमासेषु रामाणांमासिकंफलं रामवेदोन्मितंबाणं प्राप्यतेक्रमशोयदा पंचषट् दशमासानांमध्येमिश्रं नृपोन्मितं प्राप्तंचेत्त्वरंतेषांलब्धिंब्रूहि पृथक् पृथक् न्यासः मिश्रं १६ क्षेपाः १५।१२। $\frac{५०}{३}$ क्षेपयोगः $\frac{१३१}{३}$ मिश्र १६ घ्नाः क्षेपाः क्षेपयोगभक्ताः पृथक् फलाः क्रमेणः

| | | |
|---|---|---|
| ५ $\frac{६५}{१३१}$ | ४ $\frac{५२}{१३१}$ | ६ $\frac{१४}{१३१}$ |

## अथमिश्रान्तरक्रमोच्यते

स्याच्चक्रपरिधेर्हस्तैर्भक्ता मार्गकराः फलं तच्चक्रभ्रमणस्यैवमानंज्ञेयंविचक्षणैः ९८ चक्राहतंचक्रफलमिच्छाचक्रविभाजितं स्यात्तत्कांक्षाचक्रफलंतच्चक्रभ्रमणंभवेत् ९९ उदाहरणं यच्चक्रपरिधिर्हस्तैर्द्वादशैः सम्मितो भवेत् तच्चक्रभ्रमणाद्भुक्तमार्गेषष्टिकरात्मके तच्चक्रभ्रमणस्यैवमानंकस्त्युन्मितं भवेत् तत्रषट्करचक्रस्यमानंकिंभ्रमणस्यहि न्यासः चक्रपरिधिः १२मार्गः ६० चक्रभ्रमणमानंजातं ५ अथापर

चक्रपरिधिः ६ भ्रमणमानंजातं १०

## अथयोगमिश्रविधिरुच्यते

यद्युवेगाद्दिनाद्यंस्याद्दटयाद्यं घटिकाजवात् मासाद्यं मासवेगाच्चवर्षाद्यंतज्जवाद्भवेत् १०० वेगभेदोद्धृतं भुक्तं भुक्तिभेदंफलंभवेत् तत्फलंयोगकृत्कालं वि-ज्ञेयंवेगकृत्कुलं १०१ तेनघ्नौतुतयोर्वेगौस्वस्वयात समन्वितो तुल्यौस्तस्कततस्कत्यौस्तस्ततः पूर्ववन्मु-हुः १०२ कृत्वातौस्तः समावेवंविश्लेषेशीघ्रतोयदि मन्देल्पेयत्रपूर्वन्तु यद्यातार्द्धयंसमीरितं १०३ तंतस्मि-न्तद्गतेक्षित्वातौतुल्यावेवकीर्त्तितौ तयोस्कविवरंस्व-स्ववेगघ्नंफलदोद्धृतम् १०४ लब्धंप्राग्वत्तयोर्दत्वास्या-तांतौतुल्युतौसमौ द्वयोर्मार्गगयोः किंवाद्दयोर्वक्रगयो र्भवेत् १०५ वेगैक्यंफलदंवेगभेदंताद्भिन्नयोर्भवेत् उदाहरणं यज्जीवएकस्मिन्दिने अष्टयुम्मोन्मितंक्रो शंगच्छतितेन भुक्तंमार्गक्रोशाचतुर्दशाकं योपरोजी-वस्तदेकस्मिन्दिने द्वात्रिंशत्क्रोशमितं मार्गंगच्छति.

तेनभुक्तंक्रोशद्वयमार्गं चेत्तयोर्योगकालदिनात्तथात- योस्तुल्यं भुक्तमार्गंचाचक्ष्व न्यासः गतिः २८ भुक्तमा- र्गं १४ अपरस्यगतिः ३२ भुक्तमार्गं २ गत्यन्तरं ४ अ- न्तरं १२ लब्धं दिनानि ३ तुल्यं भुक्तंमार्गं ९८।९८ अ- न्यन्यासः गतिः २८ भुक्तं २ गतिः ३२ भुक्तं १४ यातं युतिकालं ३ तुल्यं भुक्तमार्गं ८२।८२ एवंग्रहयोर्गति भ्यां ऐष्यस्यात योगकालौ तुल्य भुक्तं लिप्ताभागादिकं भवति अथमिश्रान्तरविधिः गाम्यागाम्योर्जवैक्ये नभ क्त्वातद्वत्पुरान्तरं १०६ भोग्यं स्याद्योगकृत्कालं वेगपितृ कुलादिकं स्याद्यस्माद्दुद्भवोवेगस्तद्वेगजनकोच्यते १०७ कुलंतुदिनादिजाति र्भवति उदाहरणं नगरान्तरंरवाति थिक्रोशोन्मितंयत्र १५० स्वस्वनगराद्द्वौ पथिकौ एक- दिनस्यगतिभ्यांदशक्रोश १० तिथिक्रोश १५ मिति भ्यां परस्परं पर नगरंगच्छतः चेत्तयोर्युतिकालं भुक्तं मार्ग- श्चोच्यतां न्यासः अंतरं १५० क्रोशौ र्दिनगती १०।१५ गतियोगं २५ लब्धं योगदिनानि ६ तत्र प्रथमस्य लघुग-

तेरर्थान्मन्दगतेर्भुक्तमार्गे ६० अपरस्य भुक्तमार्गे ९०

एवंवक्रीमार्गीग्रहयोरपिज्ञेयं अथमिश्रान्तरविधिः

भागैर्भक्तहरैक्या स मेकं पूर्त्तीक्षणं भवेत् उदाहरणं

कुर्वन्तिदिन घस्त्रार्द्धत्र्यंशैः कर्म पृथक् पृथक् यंयेतेचे

न्मिलित्वातं कुर्वन्तितत्क्षणंवद न्यासः

| | | |
|---|---|---|
| $\frac{1}{1}$ | $\frac{1}{2}$ | $\frac{1}{3}$ |

लब्धं क्षेत्रच्छेदनादिकालः $\frac{1}{6}$

## अथक्रयविक्रय मिश्रोच्यते

नीचोच्चकुलयोर्मध्येयद्गुणस्तद्गुराहतं १०८ कृत्वानी

चकुलस्यैवफलंतत्तुल्यं भवेत् स्वमौल्याः स्वांशाकै

र्निघ्नास्तौल्यासास्तेलवाश्रपि १०९ स्युर्मिश्रघ्नाः फलै

क्यासाः मौल्यास्तौल्याः पृथक् पृथक् उदाहरणं तण्डु

लाः विपणौनिष्केणपादोनेनतौल्ये चतुर्विंशत् मिताः

लभ्यन्ते तथा निष्केणमौल्येन तौल्ये षोडशोन्मिताः मा

षाः लभ्यन्ते तथानिष्कार्द्धेन मौल्येनतौल्येवेदोन्मिताः

मुद्गाः लभ्यन्तेचेत्पंचाक्षिरूपै भगैस्ताम्निष्क पादेन

मांदीयताम् न्यासः क्रमात्तौल्यानि तत्त पडुलानां २४

माषानां १६ मुद्गानां ४ मौल्याश्चतण्डुलानां $\frac{३}{४}$ मा-
षानां १ मुद्गानां $\frac{१}{२}$ तण्डुलभागाः ५ माषभागौ २
मुद्गभागः १ स्वमौल्याः स्वस्वभागघ्नाः | $\frac{१५}{४}$ | $\frac{२}{१}$ $\frac{१}{२}$ |
तौल्याप्ताः | $\frac{५}{३२}$ $\frac{१}{८}$ $\frac{१}{८}$ | फलैक्यं $\frac{१३}{३२}$ मिश्रं $\frac{१}{४}$ त-
ण्डुलमौल्यं | $\frac{५}{५२}$ | तण्डुलतौल्य $\frac{४०}{१३}$ माषमौल्यं $\frac{१}{१३}$
माषतौल्यं $\frac{१६}{१३}$ मुद्गमौल्यं $\frac{१}{१३}$ मुद्गतौल्यं $\frac{८}{१३}$ यथा
षोडशद्रम्मानामेकोनिष्कोभवतिद्रम्माधोदेशस्थमे-
कादिकं हरं षोडशाहतं कृत्वातस्माद्द्रम्मान्निष्कजा-
तिफलंभवतीतिपूर्ववज्ज्ञेयं अथवा एतस्मिन् क्रयविक्र-
यगणिते इष्टकर्म्मणा फलयोगास्मिश्रमेकस्य मानं
स्यात्पुनस्त्रैराशिकेण एकस्येदं चेदेषां किमिति.

## अथरत्नमिश्रकम:

नरदानवधेनोनरत्नशेषैर्विभाजितम् ११० इष्टंवाशे-
षरत्नैस्तुशेषरत्नाहृतिंभजेत् लब्धंतत्स्वस्वकैकैकर-
त्नमौल्यमुदीरितम् १११ तस्मात्तुल्यधनाः सर्वेजाय-
न्तेतेहिमानवाः उदाहरणं मुक्ताःबाणाश्रगाः वज्राः

मणयः सागराः धनाः रामाणांमिथएकैक दानान्तुल्य-
धनान्वद न्यासः ५।७।४ दानं १ नराः ३ नरदान
वधेन ३ स्वस्वरत्नसंख्यावर्जिताशेषरत्ना मुक्ता २ व-
ज्रा ४ मणिः १ इष्टं ८ प्रकल्प्य स्वस्वरत्नशेषैरिष्टं ८
भक्त्वा स्वस्वैकैकरत्नमौल्यंजातं मु॰ ४ व॰ २ म॰ ८
मुक्तानांमौल्यं २० व॰ १४ म॰ ३२ अतोसमधनानि॰
२२।२२।२२ एकैकदानात्स्वस्वरत्नशेषाणि मुक्ता ३
वज्राः ५ मं॰ २ यथा मुक्तारत्नीनरेणैकं वज्रीनरायए
कंमणियुक्तायदत्तंतर्हितद्रत्नशेषं ३ एवंवज्रीनरेणै
कंमुक्तारत्नीनराय एकंमणियुक्तायदत्तं तर्हितद्रत्न
शेषं ५ एवं एकं प्रथमाय एकं द्वितीयायदत्वा तृतीय-
स्यमणिशेषंजातं २ अथवा शेषरत्ना | मु॰ २ | व॰ ४ | म॰ १ |
हृतिं शेषरत्नैर्भक्त्वा स्वस्वरत्नमौल्या. मु॰ ४ व॰ २ म॰ ८
समधनानि २२।२२।२२

## अथसुवर्णाभादीनांक्रयविक्रयविधिः

एकैकस्यतुस्वस्वैवमौल्यंतत्तौल्यताडितं ११२ कृत्वाते-

षांयुतिर्भाज्यं विज्ञेयं गणकोत्तमैः तौल्यानामेवयोगेन भक्तं
भाज्यंचयत्फलं ११३ तौल्यानांयोगमध्येतुमौल्यमेकस्य
तद्भवेत् तदेवचैक्यवर्णः स्यादैक्यमौल्यंच तन्द्भवेत् ११४
वर्ण
मलसंयुक्ततौल्यानांयोगमध्ये कुमौल्यकं मलयुक्तौल्य-
योगेनहृत्वा भाज्यमुदीरितम् ११५ तच्छोधितेन तौ-
वर्ण
ल्येन भक्तं लब्धं फलं भवेत् एकस्य शुद्धमध्येतु तन्मौल्यंजा
यतेखलु ११६ शुद्धस्यैवैकमौल्येन भाज्यंतत्परिभाज-
येत् शुद्धतौल्योच्यतेस्वर्णान्नादीनांक्रयविक्रये ११७
वर्णभाइइतिभाषायां
तौल्यैक्येचैवमौल्यघ्ने तौल्यमौल्याहते युतिं हित्वाविदि-
तमौल्यस्य तौल्यासंयत्फलं भवेत् ११८ तत्फलंमौल्य-
मानंतु चाज्ञातस्यहिजायते ऐक्यमौल्यघ्नतौल्यैक्येवि-
श्लेषंचसमाचरेत् ११९ तौल्यमौल्यवधैक्यस्यतच्छेषं
चसमुद्धरेत् भेदेनैक्याज्ञातमौल्ययोर्फलंयत्प्रजायते
१२० अज्ञातमौल्यमानंतु तज्ज्ञेयंगणकोत्तमैः उदाहर
णं यस्यैकमाषकस्य सुवर्णस्य मौल्यं युग्मोन्मितं त-
त्सुवर्णमष्टमाषोन्मितं यस्यैकमाषकस्य मौल्यं वेदतुल्यं-

तद्व्यष्टमाषोन्मितं यस्यैकमाषकस्य मौल्यं वसुमितं तद्वेदयुग्ममाषोन्मितं चेत्तदैक्यवर्णं वद तत्र सुवर्णस्थानेऽन्नादिकं माषस्थाने सेटकादिकं ज्ञात्वा एतदुदाहरणे अन्नादीनामैक्यवर्णं वद अथवा एतस्मिन्नुदाहरणे सर्वे माषाः ४० अथवा सेटकाः ४० मलयुक्ताः स्वेच्छोधनात्त्रिंश ३० न्मिताः जाताः तदैक्यवर्णं वद अथवा तन्मध्ये एकस्य मौल्यमज्ञातं चेत्तन्मौल्यं वद अथवा एकस्य तौल्यमज्ञातं चेत्तत्तौल्यं वद न्यासः

| | | | |
|---|---|---|---|
| मौ | २ | ४ | ८ |
| तौ | ८ | ८ | २४ |

ऐक्यवर्णः ६ भाज्यं २४० शुद्धैक्यवर्णं ८ शुद्धतौल्यं ३० अन्यन्यासः

| | | |
|---|---|---|
| २ | ० | ८ |
| ८ | ८ | २४ |

मौल्यं जातं ४ अथवा अन्यन्यासः

| | | |
|---|---|---|
| २ | ४ | ८ |
| ८ | ८ | ० |

तच्चोक्तवत्करणाल्लब्धं तौल्यं २४ द्वितीयोदाहरणे तौल्यैक्ये ४० ऐक्यमौल्ये ६ नघ्ने २४० तौल्यमौल्याहति १६।०।१९२ युतिं २०८ हित्वा शेषमज्ञातं स्वतौल्या ८ समज्ञातमौल्यमानं जातं ४ तृतीयोदाहरणे ऐक्यमौल्यं ६ तौल्यैक्यं १६ ऐक्यमौल्यघ्नतौल्यैक्ये ९६

मौ.२ तौ.८ वधं १६ मौ.४ तौ.८ वधं ३२ मौ.८ तौ.० वधं० वधयोग ४८

वधं तौल्यमौल्ययोः १६।३२।० योग ४८ अस्य ९६ अ-
न्तरं कृत्वा शेषं ४८ ऐक्यमौल्य ६ अज्ञातमौल्य ८ योर्भे-
देन २ भक्तं लब्धं २४ जातं तौल्यं २४

## अथ मिश्रमध्ये एकद्वित्र्यादि भेदानयनविधिः

क्रमस्थैरुद्धृतानंकान्व्यस्तानेकोत्तरस्थितान् १२१ सि-
द्धेन निजपूर्वेण हत्वा तस्माद्यथाक्रमं एकद्वित्र्यादि भेदाः
स्युरिदं साधारणं मतम् १२२ उदाहरणं एकद्वित्र्याद्या-
द्यषड्रसभेदान्वद न्यासः

| | | | | | |
|---|---|---|---|---|---|
| ६/१ | ५/२ | ४/३ | ३/४ | २/५ | १/६ |

क्रमा-
ज्जाताः ६।१५।२०।१५।६।१ मिष्ट अम्ल लवण क-
टुक तिक्त कषाय रसानामेषां योगं षड्रसभेदाः ६३
इति मिश्रव्यवहारः समाप्तः

## अथ श्रेढीव्यवहारः

तत्र संकलित विधिः गच्छार्द्धं सैक गच्छघ्नमेकाद्यंक युति
र्भवेत् तत्संकलितसंज्ञः स्याद्धत्वा तेनाब्धियुक् पदं १२३
त्र्याप्तं संकलितानां तु योगं ज्ञेयं विचक्षणैः गच्छार्द्धं द्विगुणि-
तं सैकं कृत्वा संकलिताहतं १२४ रामाप्तमेकपूर्वाणां

वर्गाणामैक्यमुच्यते एकदीनां धनैक्यं स्याद्वर्गसंकलि-
तस्यच १२५ उदाहरणं एकादीनांपंचपर्य्यन्तानांचतु-
ष्कर्मान्विद न्यासः १।२।३।४।५ संकलितानि १।३
।६।१०।१५ एषामैक्यानि १।४।१०।२०।३५ वर्गैक्या-
नि १।५।१४।३०।५५। धनैक्यानि १।९।३६।१००।
२२५.

## अथश्रेढ्यन्तर विधिः

वृद्धिघ्नंव्येकगच्छन्तुसाद्यमन्त्यधनंभवेत् आद्यन्तै-
कदलंमध्यंसर्वम्मध्यंपदाहतिः १२६ सर्वगच्छोद्धृतंव्ये-
कगच्छघ्नार्द्धचयोनितं आदिस्तदुच्यतेसर्वगच्छासं
मुखववर्जितम् १२७ व्येकगच्छदलेनासंवृद्धिः स्यात्त-
च्चयोत्तरः द्विघ्नसर्वंचयघ्नंचतूत्तरार्द्ध मुखान्तरात् १२८
वर्गाढ्यंतत्पदं (मूलं) चादिहीनमर्द्धचयान्वितम् उत्तरेणोद्धृतं
लब्धंगच्छं (गच्छं) ज्ञेयंचतत्पदं १२९ उदाहरणम् वक्रेरामं
चयेयुग्मंगच्छंयत्रयुगोन्मितं तत्रतर्कोन्मितान्कमन्त्री-
घ्नंब्रूहिविचक्षण न्यासः आदिः ३ चयः २ पदं ४ अन्त्य-
धनं ९ मध्यधनं ६ आदिघनं ३ सर्वधनं २४.

## अथद्विगुणचयादिफलानयनश्रेढ्यंतरविधिः

ओजेगच्छेत्तदेकोने गुणलक्षणमालिखेत् तुल्येतद्दलिते-वर्गचिन्हमेवंसमालिखेत् १३० तद्गच्छक्षयपर्य्यन्तंकृत्वान्त्येगुणकोभवेत् व्यस्तात्तद्गुणवर्गोत्थंफलमेकेन व-र्जितं १३१ एकोनगुणकेनासंकृत्वालब्धंमुखाहतं त-त्सर्वगणितंज्ञेयंधीरैस्तत्रगुणोत्तरे १३२ उदाहरणं-आदिर्नेत्रोन्मितंयत्रचोत्तरंत्रिगुणोन्मितं गच्छंपंचो-न्मितंतत्रसर्वंब्रूहिविचक्षण तद्वत्तर्कोन्मितेगच्छेसर्वं ब्रूहिविचक्षण न्यासः आदिः २ चयः ३ गच्छः ५ वल्ली

| | | |
|---|---|---|
| ५ | गच्छ | |
| ४ | गु | २४३ |
| २ | वं | ८१ |
| १ | व | ९ |
| ० | गु | ३ |

गुणवर्गजंफलं २४३ व्येकं २४२ व्येक गुण २ भक्तफलं १२१ आदि २ गुणं जातं सर्वधनं २४२

## अथसमादिवृत्तज्ञानायश्रेढ्यंतरविधिः

गच्छंपादाक्षरमितंद्विगुणंतुचयंभवेत् पूर्ववद्यदधःस्था-नाद्गुणवर्गभवंफलं १३३ भेदानांसमवृत्तस्यसंख्या-ज्ञेयाविचक्षणैः तद्वर्गंनिजमूलोनंवृत्तस्यार्द्धसमस्यहि

१३४ समवृत्तस्य भेदानांसंख्यावर्गकृतौतथा भेदानांसमवृत्तस्यसंख्यावर्गपरित्यजेत् १३५ संख्यास्यादोजवृत्तस्य भेदानांनिजच्छन्दजा उदाहरणं तुल्यानामर्द्धसमानांविषमाणांवृत्तानां पृथक् पृथक् अनुष्टुप्छंदसिभेद संख्यांवद न्यासः उत्तरोद्विगुणाः २ गच्छं ८ वल्ली

| | |
|---|---|
| ४ | वर्ग |
| २ | वर्ग |
| १ | वर्ग |
| - | गुण |

गुणः २ वर्गः ४ वर्गः १६ व २५६ गुणवर्गजंफलं २५६ समवृत्त भेदानांसंख्या २५६ अस्यवर्ग ६५५३६ स्वमूलोनं २५६ अर्द्धसमवृत्तानां भेद संख्या ६५२८० अथ २५६ वर्ग ६५५३६ अस्यवर्ग ४२९४९६७२९६ अस्यमूलं हित्वा विषमवृत्तानां भेद संख्याजाता ४२९४९०१७६० अष्टाक्षरपदस्यसमवृत्त भेदसंख्या २५६ अर्द्ध सम भेद संख्या ६५-२८० विषमवृत्त भेद संख्या ४२९४९०१७६०

## अथसमवृत्तादिपरिज्ञानम्

चत्वारश्चरणा यस्यचिह्निता स्तुल्यलक्षणैः १३६ तुल्यवृत्तोदितस्तत्तुच्छन्दःशास्त्रविशारदैः तृतीयमादिव-

द्यस्य द्वितीयमन्त्यवद्भवेत् १३७ तत्खण्डसमवृत्तं स्यात्तद्भिन्नंविषमंभवेत् इतिश्रेढीव्यवहारः समाप्तः

## अथक्षेत्रव्यवहारः

शून्यचिह्नविचारार्थंबिन्दुः शून्यंविलिख्यते १३८ स्थानमात्रं भवेद्यस्य भागमात्रं भवेन्नहि तच्छून्यंगीयतेयस्याभावश्चेद्विस्तृतेस्तथा १३९ दैर्घ्यस्यस्थानमात्रःस्यात्तन्तुभागकरोच्यते वेधाभावो भवेद्यत्रतत्रक्षेत्रो निगद्यते १४० वृत्तेयदिच्छयाव्यासौव्यस्तबाणसमौबुधैः दत्वात् व्यासयोर्योगस्थानंकेंद्राभिधंमतं १४१ वृत्तकेन्द्र-




न्यासः दोःकोट्याकाररेखाकर्णरूपगताथवा ऋजुतन्तुसमारेखाख्याता जगतिमन्यते १४२ विद्युद्रूपगतारेखावांशरेखावर्त्तगतापिच चापरूपगताचैवव्यंगरेखानिगद्यते १४३ नृणांमस्तकदेशास्थियोगसंधिस्थलंगता यारेखाकुण्डलाकारा चित्ररेखातुसास्मृता १४४ तत्रोर्द्ध्वाधोस्थियोगस्यमस्तकस्यचपेचकेः

सूचीरूपसमेश्चित्ररेखा भवति मस्तके १४५

## अथ भुजकोटिकर्णज्ञानम्

तिर्य्यग्भुजं भुजं ज्ञेयं कोटिस्तूर्ध्वभुजोच्यते कोटिबाह्व
ग्रयोर्मध्ये यत्सूत्रं तच्छ्रवोच्यते १४६ दोर्वर्गात्कोटिवर्गाढ्यान्मूलं
तच्छ्रवणो भवेत् कोटिवर्गोनितात्कर्णवर्गान्मूलं भुजं भवेत् १४७
दोःकर्णवर्गयोर्भेदान्मूलं कोटिस्तदुच्यते उदाहरणं कोटिर्वेदोन्मिता
यत्र बाहुस्त्वग्निमितस्तथा कर्णः पंचोन्मितं तत्र शीघ्रं
कर्म्मत्रयं वद न्यासः कोटि कर्णः भुजः कोटिः ४ भुजः ३
कर्णः ५

## अथ समकोटिभुजकरणम्

ओजदोःकोटिघातोत्थं मूलं यत्स्यात्कृतेरिव १४८ त-
त्कोटिभुजयोस्तुल्यमानं ज्ञेयं विचक्षणैः उदाहरणं यत्र
भूपोन्मिता कोटिः १६ नवबाहु ९ स्तत्र समभुजकोटी-
वद कोटिः १६ भुजः ९ वधं १४४ मूलं १२ समभुज १२
कोटि १२ **अथ समकोटिभुजवेधानामानयनविधिः**
ओजदोःकोटिवेधानां घातान्मूलं घनादिव १४९ यत्त

द्वोः कोटिवेधानांतुल्यंमानंतदुच्यते उदाहरणं यत्रद्वाद-
शकोटिः १२ नव ९ भुजः युग्मो २ न्मितं वेधंतत्रसमकोटि
भुजवेधान्वद न्यासः कोटिः १२ बाहु ९ वेधः २ घातः
२१६ मूलं ६ सममानं भुजः ६ कोटिः ६ वेधः ६ आ-
सन्नमूलानयनं लब्धवर्गान्तरं कृत्वासैकलब्ध कृतेोह्-
रः १५० स्याद्धरेणोद्धृतंमूलस्यावशेषन्तुतत्फलं स्या-
न्मूलकुलजंतत्तु वर्गासन्नपदम्भवेत् १५१ सैकलब्धध-
नेकृत्वा भेदंलब्धधनस्यच तेनाप्तं धनमूलस्यत्ववशेषं
फलंभवेत् १५२ तद्युतासन्नमूलंस्याद्भिन्नवर्गेधनेत-
था हारांशवधमूलंतु हाराप्तंतत्समीपजं १५३ वर्गमू-
लंतु विज्ञेयं घनमूलंच पण्डितैः उदाहरणं सार्द्धवेदस्य
वर्गमूलंतथा घनमूलंचवद न्यासः $\frac{९}{२}$ हारांश २।९ घा-
त १८ मूलं ४ मूलावशेषं २ मूल ४ वर्ग १६ सैकमूल ५
वर्ग २५ वर्गा |१६।२५| न्तरं ९ तेनाप्तंमूलावशेषंजातं
$\frac{२}{९}$ मूलयुतंजातं $\frac{३८}{९}$ हाराप्तंजातं भिन्नवर्गेनिकटमू-
लं $\frac{१९}{९}$ अन्यन्यासः धनः $\frac{९}{२}$ हारांश २।९ घात १८

मूलं २ मूलावशेषं १० मूलेधनं ८ सैकमूल ३ धनं २७ धनयो ८।२७ रन्तरेण १९ सं मूलावशेषंजातं १०/१९ मूलयुतंजातं ४८/१९ हार २ भक्तं जातं भिन्नधने निकटमूलं ४८/३८ सूक्ष्ममूलानयनंतुज्योत्पत्तिस्थानेकथयामि **अथाऽकरणीगतेष्टभुजात्कर्णकोटिरचनोच्यते.** इष्टास्तमिष्टदोर्वर्गलब्धमिष्टाद्यवर्जितं १५४ कृत्वाखण्डे भवेतांतौकर्णकोटीत्वनेकधा इष्टयोर्वर्ग भेदन्तुबाहुः स्यादिष्टयोस्तयोः १५५ वर्गयोगन्तुतत्कर्णस्यात्तथाऽकरणीगतं व्येकेनहीष्टवर्गेण भक्तं द्विघ्नेष्टताडितं १५६ दोः संज्ञंस्यात्तुकोटिस्सात्विष्टघ्नीत द्भुजोनिता तज्जात्यं जायतेकर्णंचाथकर्णयमाहृतम् १५७ हीष्टघ्नंत्विष्टवर्गेण सैकेनाप्तन्तुजायते कोटिकोटिगुणंत्विष्टं कृत्वातच्छ्रवणेन्तरम् १५८ दोः स्याद्वात्विष्टयोर्घातं द्विघ्नं कोटिस्तदुच्यते उदाहरणं यत्रस्वेष्टभुजं द्वादशांतत्र कर्णकोटीवद न्यासः इष्टभुजः १२ वर्गः १४४ इष्ट २ भक्तः ७२ इष्टेन २ युक्तोनार्द्धीकृतः कर्ण

कोटी ३७।३५ एवंमिष्टवशाद्बहुधाकर्णकोटी स्यातां अथवाइष्टं भुजमिष्टकोटिरितिज्ञात्वा उक्तवत्कृत्वाकर्ण भुजौस्याताम् अथप्रकारान्तरेणेष्टकर्णाद्भुजकोट्योरानयनम् इष्टवर्गेणसैकेन द्विघ्नकर्णोविभाजितं १५९ फलमिष्टाहतंदोः स्यात्कोटिः कर्णफलान्तरं उदाहरणम् यत्रतिथिमितंकर्णंतत्र भुजकोटीवद न्यासः कर्णः १५ द्विघ्नः ३० इष्टः २ वर्गः ४ इष्टवर्गेणसैकेन ५ द्विघ्नकर्णः ३० भक्तः फलं ६ इष्टाहतंफलं १२ भुजः १२ फलकर्णान्तरंकोटिः ९ इष्टवशाद्बहुधा.

## अथकर्णकोटियुतिबाहुभ्यांकर्णकोटिज्ञानमथवाभुजकर्णैक्यकोटिभ्यां कर्णभुजानयनं विरच्यते

कोटिवर्गोथवाबाह्वोर्वर्गः खण्डोचितोद्धृतः १६० लब्ध्या खण्डोचितेद्विस्थेहीनयुक्तेदलीकृते खण्डे द्वे खण्डयोगस्यविज्ञेयेदोः श्रवाकृती (भुजकर्णरूपे) १६१ तेकोटिकर्णरूपेवाज्ञेयेखण्डेविचक्षणैः यस्यखण्डानिखण्डेवास्युस्तत्ख-

एडोचितोच्यते १६२ उदाहरणं अष्टकरतुल्यदीर्घवं-शोवायुनैकदेशे भग्नः स्वमूलादब्धिकरे भुजे तदग्रख-ण्डः श्रुतिरूपलग्नश्चेत्कर्णकोटिरूपेवंशखण्डे वदन्या-स: 

बाहुः ४ वर्गः १६ खण्डोचितेन ८ भक्तः फलं २ अतोवंशखण्डेकोटिकर्णरूपे कोटिः ३ कर्णः ५ उदाहरणं शिवमन्दिराद्द्वात्रिंशद्धस्त भूमौ पूर्वस्यांविष्णुमन्दिरं शिवमन्दिरात्षोडशहस्तोन्मि-तेयाम्येब्रह्ममन्दिरं शिवविष्णुमन्दिरान्तरे कस्मिंश्चि-दज्ञातस्थाने गणपतिमन्दिरं गणपतिविष्णुमन्दिरान्त-रसमं गणपतिब्रह्ममन्दिरान्तरंचेत् शिवगणेशमन्दिरा-न्तरं तथाविष्णुगणेशगृहान्तरं तथाब्रह्मगणेशगृहान्त-रंवदन्यासः 

कोटिः १६ खण्डयोग्यः ३२ उक्तवत् शिवगणेशान्तरं १२ विष्णुगणेशान्तरं २० ब्रह्मगणेशान्तरम् २० अथकोटिकर्णान्तरबा-हुभ्यांकोटिकर्णयोरानयनम् कोटिकर्ण-

न्तरेणासंदोर्वर्गकोटिकर्णयोः विश्लेषेणोनयुक्तोर्द्धिता-
वुक्तौकोटिकर्णकौ १६३ उदाहरणं कोटिकर्णान्तरमे-
कार्द्धं यत्रबाहुर्यमोन्मितं तत्र कोटिकर्णौवद न्यासः को-
टिकर्णयोरन्तरं $\frac{१}{२}$ बाहुः २ उक्तवत्कोटिकर्णौ | $\frac{१५}{४}$ ८ $\frac{१७}{४}$ |

## अथोड्डीयमानानयनम्

द्विघ्नकोटियुतेनैवबाहुना परिभाजितं बाहुंकोटयाहृ-
तंकृत्वाह्युड्डीयंतन्निगद्यते १६४ उदाहरणं वेदोन्मि-
तेकोटिरूपे कपिद्वयंगतमेकः पथेनान्यः किंचिदूर्ध्वंग-
त्वाकर्णरूपोष्टोन्मिते भुजे उत्तीर्यतयोः समगमनंचेदु
ड्डीयमानंवद न्यासः भुजः ८ कोटिः ४
समगतिः १२ लब्धमुड्डीयमानं २ कोटिः ६ भुजः ८ क-
र्णः १०

## अथान्यत्करणविधिः

दोःकोटियुतिवर्गोनात्कर्णवर्गाद्द्विमाहृतात् मूले द्विस्थे
न्तरंयोगं योगेनाप्तिविभाजिते १६५ स्यातांतौकोटि-
बाहूवाकर्णवर्गाद्द्विमाहृतात् दोःकोटिभेदवर्गोनान्मू-
लेद्विस्थेन्तरेणाच १६६ भेदंयोगंदलेकृत्वातत्रैकत्र

स्मरेन्दुजम् अन्यत्रैवस्मरेत्कोटिं तत्सिद्धिः स्याद्यथात
था १६७ उदाहरणं यत्रपंचोन्मितंकर्णंभुजकोटियो-
गंनगंतत्रबाहुंकोटिंचवद न्यासः को ४ क ५ भु ३ कर्णः
५ दोःकोटियोगः ७ जातेकोटिभुजे ४।३ वाकर्णः ५
भुजकोट्यन्तरं १ जातेकोटिभुजे ४।३ अथवा भुजः
३ कोटिः ४. **अथकर्णयोर्योगाल्लम्बादिपरिज्ञानं**
तुल्यभूमिस्थलेवेण्वोरन्योन्यमग्रमूलयोः सूत्रयोग
स्थलाद्वेण्वोर्घातंवंशैक्यभाजितं १६८ लम्बः स्या-
न्निजवंशघ्ना पृथ्वीवंशैक्यभाजिता स्वाबाधा भूमिख-
ण्डः स्याल्लम्बान्मूलम्बयोर्वधं १६९ स्वाबाधाभाजितं
लब्धमन्यवंशसमुदीरितम् स्वाबाधालम्बवर्गैक्यमूलं
कर्णांशकंभवेत् १७० पृथ्वीकर्णांशयोर्घातंतस्या
बाधोद्धृतंफलम् पूर्णकर्णोच्यते पूर्णकर्णतल्लम्ब-
मर्दितम् १७१ कर्णांशेनोद्धृतंलब्धंतद्वंशंसमुदीरि-
तम् उदाहरणं रामषण्मितयोर्वंशयोःपरस्पर मूला-
ग्रगयोः सूत्रयोर्योगस्थानाल्लम्बादिकान्वद न्यासः




वंशौ ६।३ योगः ९ लब्धः २ वंशान्तरभूमिः १२ चेल्लम्बादुभयत्र भूखण्डे ८।४ वाभू १८ श्चेदाबाधे भूखण्डे १२।६ भूवशाद्बहुधा भूखण्डे स्याताम्

## अथाऽक्षेत्रविचारः

यत्रैव लघुदोर्योगं तुल्यं वाल्पं महाभुजात् १७२ ऋजुदोः क्षेत्रमक्षेत्रं विज्ञेयं धृष्टभाषितम् उदाहरणं यत्र चतुर्भुजे द्वादशद्वित्रितर्कोन्मिताः भुजाः त्रिकोणेष्टाब्धिरसोन्मिताः भुजाः धृष्टेणोद्दिष्टास्तत्र तदक्षेत्रं ज्ञेयं हि न्यासः




बहुभुजं १२ लघु २।३।६ योगं ११ वा बहुभुजः ८ लघु २।६ योगं ८ अथवा भुजशलाकया अक्षेत्रोपपत्तिः

## अथ त्र्यस्रक्षेत्रफलानयनमुच्यते

क्षेत्रे त्र्यस्रे स्मरेदेकं बाहुं भूरिति पण्डितैः १७३ त्र्यस्रेतद्भुजयोर्योगं भेदघ्नं तद्भुजोद्भृतं द्विस्थाल्लब्ध्याधराहीन-

न्नयुक्तातद्दलितातयोः १७४ आबाधे भुजयो र्भूमेःखण्डे ज्ञेये विचक्षणैः स्वाबाधाबाहुकृत्योऽस्त्क यद्विश्लेषास्पदं भवेत् १७५ तल्लम्बं भुजयो स्त्वयोगात्कोटिसमं भवेत् तद्भूलम्बाहतेरर्द्धं त्र्यस्रे क्षेत्रफलं भवेत् १७६ सर्वबाह्वैक्यखण्डं तु लिखित्वा ऽब्धिस्थलेषु च ह्रित्वैकैकस्थ-

भुजान्

लेबाहून् शेषघातपदं स्फुटं १७७ त्र्यस्रे क्षेत्रफलं ज्ञेयं चतुर्बाह्वादिके तथा क्षेत्रे क्षेत्रफलं स्थूलं विज्ञेयं पण्डितोत्तमैः १७८ उदाहरणं त्र्यस्रे शक्रमिते भूमौ बाहू विश्वतिथीसमौ यत्र तत्र क्षेत्रफलं वद न्यासः भूः १४




भुजौ १३।१५ लब्धे आबाधे ५।९ लम्बश्च १२ क्षेत्रफलम् ८४ अथ ऋणाबाधोदाहरणं नवतुल्यक्षितौ सप्तदश दशमितौ बाहू यत्र तत्र त्र्यस्रे क्षेत्र फलं वद न्यासः भुजौ




१७।१० भूमिः ९ अत्र निर्वाहार्थे सप्तदशोन्मितं भुजं १७ भूरिति ज्ञात्वा तत्र नवदशौ बाहू स्मृत्वा ९।१०




न्यासः भूः १७ बाहू ९।१० आबाधे $\frac{१३५}{१७}$ $\frac{१५४}{१७}$ लम्बः $\frac{७२}{१७}$ क्षेत्रफलं ३६ अथवा सर्वभूमिः १५ अर्थात्पृथ्वीऋणाबाधयोर्योगं १५ तल्लम्ब ८ घ्नमर्द्धं ६० तत्सर्णाबाधासहितस्य क्षेत्रफलं ६० तस्मिन् ऋणाबाधैव भूम्य ६ र्द्धं ३ लम्बा ८ हतं कृत्वा जातमृणक्षेत्रफलं २४ तं हित्वा जातं क्षेत्रफलं ३६ अथवा भुजौ १०।१७ भूमिः ९ त्र्यस्रे तद्भुजयोर्योगमित्यादिना लब्धं २१ अनेन भूरूना न स्यात् अस्मादेव भूरपनीता शेषार्द्धमृणगताबाधा दिग्वैपरीत्येनेत्यर्थः तथा जाते आबाधे ६।१५ अत उभयत्रापि जातो लम्बः ८ फलं च ३६ अथवा ९।१०।१७ बाहूनां योगा ३६ र्द्धं १८ चतुः स्थितं १८।१८।१८।१८ बाहुभि ९।१०।१७ र्विरहितशेष ९।८।१।१८ वधा १२९६ न्मूलं ३६ स्फुटं क्षेत्रफलम् ३६ ऋणाबाधास्थले प्रकारान्तरेण फलानयनं त्र्यस्रे तु भुजयोर्भेदं योगनिघ्नं भुवोद्धृतम्

चेत्फलं भूमितश्चोर्द्धं भूमिं हित्वांफलेदलं १७९ जायते
सासयाबाधा भूफलैक्यदलंतथा आबाधात्वधिकस्यैव
बाह्वोर्ज्ञेयाविचक्षणैः १८० स्वाबाधाबाहुकृत्योस्तु भे-
दमूलंतु यद्भवेत् तल्लम्बमुच्यतेतेन चाबाधे गुणिते पृथक्
१८१ विश्लेषार्द्धतयोस्तत्र त्र्यस्रक्षेत्रफलं भवेत्

## अथ चतुर्भुजादिक्षेत्रे फलानयनविधिः

चतुर्बाह्वादिके क्षेत्रे बुद्ध्या त्र्यस्रान् यमादिकान् १८२
कृत्वा तत्र ततस्तेषां त्र्यस्राणां फलसंयुतिं कृत्वा क्षेत्र-
फलं तस्य क्षेत्रस्यैव हि जायते १८३ त्र्यस्रे लम्बसमीप-
स्थकर्णरूपभुजस्य च वर्गे लम्बकृतिं हित्वा मूलं भूखण्ड
मुच्यते १८४ आबाधासिद्धबाहुस्तु तद्भूखण्डमुदीरि-
तम् कोटिं लम्बाभिधं ज्ञेयं कर्णं वाकल्प्य काश्यपीम् १८५
तद्भूस्पर्शितौ बाहू बाहू ज्ञेयौ विचक्षणैः तत्राबाधे च लम्बं
च ह्यानयेत्तत्फलं खलु १८६ तुल्यबाहु चतुष्कोण क्षे-
त्रे त्वेकभुजस्य च वर्गे वेदाहृते भेदादेककर्णकृतेः पदं १८७
अन्यत्कर्णोच्यते घातं यत्तयोरोजकर्णयोः तस्यार्द्धं तत्फ

लंज्ञेयं क्षेत्रेतुल्यचतुर्भुजे १८८ लम्बघ्नं भूमुखैक्यार्द्धं तुल्यलम्बेचतुर्भुजे यत्तत्फलोच्यतेतुल्यकर्णक्षेत्रेचतुर्भुजे १८९ बाहुकोटिवधंप्राग्वद्विज्ञेयंतत्फलंखलु वृत्तबाहुयुतक्षेत्रेवृत्ताकारांशकंफलं १९० पृथक्कृत्वाफलेन्योत्थेयुक्त्वाक्षेत्रफलंभवेत् ।

## अथक्षेत्राणामाकारज्ञानार्थंत्रिभुजादीनांचिह्नानिलिख्यंते



उदाहरणम् यत्र भूमिः शक्रमिता बाहू विश्वतिथिमितौ तत्र क्षेत्रफलं वद यत्र भूमिरिन्द्रमिता मुखं नवमितं बाहू सूर्यविश्वोन्मितौ तत्र क्षेत्रफलं वद यत्र तत्व तत्व-पंचाश्वि पंचाश्विमिताः भुजाः २५।२५।२५।२५ खत्रिमितः[३०] वा शक्रमितस्[३४] त्वेकः[१] कर्णस्तत्र विषम कर्ण-समचतुर्भुज क्षेत्रफलं वद यत्र विस्तारं षण्मितं[६] दैर्घ्य-मष्टोन्मितं[८] तत्र समलम्ब समकर्ण दीर्घचतुरस्रे क्षेत्रफलं वद यत्र भूः कृतिसमा[२२] मुखं शिवं[११] बाहू नख[२०] विश्वौ[१३] तत्र क्षेत्रफलं वद यत्र मुखं कक्षोन्मितं[५१] वामबाहुः खाब्धि[४०]मितः दक्षिणबाहुरष्टांग[६८]मितः भूमिः पंचाद्रि[७५]मिता तत्र क्षेत्रफलं वद यत्र वामबाहुर्नन्दाग्नि[३९]मितः दक्षिण-बाहुः[५२] द्व्यक्ष प्रमितः अन्य वामभुजस्तत्वोन्मितः[२५] भूमिः षष्टि[६०]मिता तत्र क्षेत्रफलं वद .

## अथ क्षेत्रफलात्कोटिभुजानयनं

तुल्यकर्णाच्चतुर्बाहुक्षेत्रे क्षेत्रफलं भजेत् १९१ कल्पि-तेष्टभुजेनैव कोटिः स्यात्कोटितो भुजम् अस्मिन्द्विघ्ना

फलादेवंकोटिः स्यात्कोटितो भुजम्

## अथ घनफलक्षेत्रफल पृष्ठफलानां स्वरूपज्ञानमुच्यते.

सर्वतोवेधविस्तारदैर्घ्यैस्तुल्यंघनंभवेत् तत्खंडगा-
नितुल्यानिजायन्ते बाह्यतः खलु १९३ तुल्यैश्चतुर्भु-
जैर्बद्धंतुल्यकर्णद्वयान्वितम् क्षेत्रंतज्ञीयतेतद्वत्पृष्ट-
क्षेत्रमुदीरितम् १९४.

## अथविषमगोलविषमवृत्तयोः समगोलसमवृत्त समव्यासकरणक्रमउच्यते.

अल्पवृत्तस्थले गोलमधिवृत्तस्थलेतया मापयित्वा
तुतद्योगम्मापितस्थानसंख्यया १९५ भक्त्वातत्प-
रिधिर्ज्ञेय एवं विषमकुण्डले अल्पाधिव्याससंयोग
म्मापितस्थानसंख्यया १९६ भक्त्वासंविस्तृतिर्ज्ञे
या तद्वृत्तंकुण्डलोच्यते वाल्पाधिवृत्तसंयोगम्मापित
स्थानसंख्यया १९७ उद्धृतंपरिधिर्ज्ञेय इत्थंसर्वत्र

पाण्डितैः **अथव्यासज्ञानं**

एकप्रांत्यस्थलात्सूत्रमन्यप्रांत्यांशकंगतं १९८ वृत्ते

सर्वाधिकंयत्स्यात्तद्व्यासंसमुदीरितम् .

## अथवृत्तव्यासयोरन्योन्यमानयनम्

४९०८८ १५६२५

प·धि· व्यासघ्नाअष्टनागाअतानास्तत्वांगवासरैः १९९

परिधीः १५६२५

भक्ताः वृत्तोच्यते व्या· वृत्तंहत्वातत्वांगवासरैः भक्त्वा

४९०८८

नागो ऽगाभ्रांकवेदैर्व्यासोच्यतेखलु २०० सामान्य प·विध्या·

३९२७ १२५०

व्यासंभांकाग्निभिर्हत्वा वृत्तंखबाक्षार्कभिस्तथा तावद-

न्योन्यगुणासौस्तस्सामान्येवृत्तविस्तृती २०१ स्थू·परि·

२२ ७ परिधिः

ध्या· व्यासघ्नाः श्रुतयः शैलैर्भक्ताः स्यात्स्थूलमण्डलः

७ २२

स्थू·व्या· वृत्तंशैलैर्हतंस्थूलं श्रुत्यासंव्यासमीरितम् २०२

७

उदाहरणं ससोन्मितेव्यासेवृत्तंवद वृत्ताद्व्यासंचोच्य-

परिधिः

७

व्यासः

ताम् व्यासः ७ परिधिमानंसूक्ष्मं

२१ $\frac{१५४९१}{१५६२५}$ सामान्यपरिधिः २१ $\frac{१२३९}{१२५०}$

स्थूलपरिधिस्तु २२ परिधि २१ $\frac{१५४९१}{१५६२५}$ जातंव्यासं

७ सामान्यपरिधि २१ $\frac{१२३९}{१२५०}$ जातंव्यासं ७ परिधि

श्वे २२ इ्यासः ७ **अथवृत्तक्षेत्रेक्षेत्रफलानयनम्**

वृत्ताऽर्द्धव्यासखण्डघ्नं वृत्तक्षेत्रफलं भवेत् व्यासव-
१२२७२ १५६२५
र्गाहताः युग्मसप्तयुग्मदिवाकराः२०३तत्वषड्बाणैर्भक्ता
वृत्तक्षेत्रफलं भवेत् उदाहरणं सप्तव्यासोऽस्मितेवृ-
त्तक्षेत्रे फलंवद न्यासः




व्यासः ७ परि-
धिः २१ $\frac{१५४९१}{१५६२५}$ क्षेत्रफलम्
३८ $\frac{७५७८}{१५६२५}$

**अथगोलेपृष्ठफलानयनम्**

४९०८८
व्यासं वृत्ताहतं यत्तद्गोले पृष्ठफलं भवेत् २०४ नाग
१५६२५
नागाभ्रता नघ्नं व्यासं विस्तारताडितम् पञ्चनेत्राङ्ग
घस्राप्तं गोले पृष्ठफलं भवेत् २०५ उदाहरणम् यद्गो-
ल विस्तृतिः शैलाऽन्तपृष्ठाख्यं फलंवद न्यासः




व्यासः ७ परिधिः २१ $\frac{१५४९१}{१५६२५}$ गोलेपृष्ठफलं १५३ $\frac{१४६८७}{१५६२५}$

**अथगोलेघनफलानयनं**

११६६६ ४९०८८
स्वघ्नव्यासाहताहृत्तात्षट्षडंगशिवाहतात् गोष्ट-
शून्यांकबाणाप्ताद्गोले घनफलं भवेत् २०६ व्यासव-
४९०८८ ११६६६
र्गाहतंव्यासमष्टाष्टाभ्रांकसागरैः हृत्वाषट्तर्कषट्चं-

१२३२६५६२५
द्र्चंद्रैस्स्यादेव सम्भजेत् २०७ तत्वषट्पंचषड्वन्त
द्र्यंके गोलि घनं भवेत् उदाहरणं यद्गोलव्यासं सप्ततुल्यं
तद्गोलान्तर्गतं घनफलं वद न्यासः




गोलव्यासः ७ परिधिः २१ $\frac{१५४५१}{१५६२५}$
स्वघ्नव्यासः ४९ गोलस्यान्तर्गतं घनफलं ज्ञातम्-
२१२ $\frac{६९०३१६०४४}{१२३२६५६२५}$

## अथान्योक्तं घनफलानयनम्

गोले विस्तार वर्गघ्नं वृत्तांतर्कौद्धृतं भवेत् २०८ स्थूलं घन-
फलं त्वेतच्चाऽन्योक्तंचाऽपिलौकिकम् उदाहरणम्
व्यासः ७ परिधिः २१ $\frac{१५४५१}{१५६२५}$ व्यासवर्गः ४९ उक्त
वज्जातं घनफलं स्थूलं १७९ $\frac{२७९६७}{४६८७५}$

## अथ वृत्तक्षेत्रस्य क्षेत्रफलोपपत्तिक्रमोविरच्यते.

वृत्तव्यासमभिन्नेनतद्व्यासेनैव सम्भजेत् २०९ ल-
ब्धेनैकादिकं पूर्णविस्तारान्तं पृथक् पृथक् कृत्वाविस्तृ-
तयोज्ञेयास्तेषां कृत्वाच कुण्डलान् परिधीन् २१० एकविस्तार
जंवृत्त खण्ड मेकफलं मतम् अर्द्धं द्वितीय व्यासजंवृत्तमेके-

व्यासज कुण्डले २११ युक्त्वायुग्मोद्धृतंलब्धंतद्विती-
यं फलंमतं तृतीयव्यासजंवृत्तंद्वितीयव्यासजेतथा
२१२ वृत्तेयुक्त्वाचतत्खण्डं तृतीयं फलमुच्यते चतु-
र्थव्यासजंवृत्तं तृतीयव्यासजेतथा २१३ वृत्तेयुक्त्वा
तदर्द्धंच तच्चतुर्थंफलंमतं एवंस्वस्वसमीपादिजंयुक्त्वा
ऽर्द्धंफलं भवेत् २१४ प्राग्व्यासघ्नं फलैक्याऽर्द्धं वृत्त-
क्षेत्रफलं भवेत् वृत्तक्षेत्रफलं यत्तद्वृत्ते पृष्ठफलंमतं
२१५ यथाव्यासः $७\frac{१}{२}$ अभिन्नेन ७ भक्तः ऊर्ध्वं
$१\frac{१}{१४}$ अनेनैकं १ हृत्वा प्रथमव्यासः $१\frac{१}{१४}$ तेनैवयु-
ग्मंहृत्वाद्वितीय व्यासः $२\frac{१}{७}$ एवंतृतीयव्यासः $३\frac{३}{१४}$
चतुर्थ $४\frac{२}{७}$ पंचम $५\frac{५}{१४}$ षष्ठ $६\frac{३}{७}$ सप्तम $७\frac{१}{२}$
प्रथमव्यास $१\frac{१}{१४}$ स्यपरिधिः $\frac{७३६३२}{२१८७५}$ प्रथम-
फलं $\frac{३६८१६}{२१८७५}$ द्वितीयव्यास $२\frac{१}{७}$ स्यपरिधिः
$\frac{१४७२६४}{२१८७५}$ द्वितीयफलं $\frac{११०४४८}{२१८७५}$ तृतीयव्यास $३\frac{३}{१४}$
स्यपरिधिः $\frac{२२०८९६}{२१८७५}$ तृतीयफलं $\frac{३६८१६}{४३७५}$ वाफलं
$\frac{१८४०८०}{२१८७५}$ चतुर्थव्यास $४\frac{२}{७}$ स्यपरिधिः $\frac{२९४५२८}{२१८७५}$

चतुर्थफलं $\frac{२५७७१२}{२१८७५}$ पंचमव्यास ५ $\frac{५}{१४}$ स्यपरि-
धिः $\left|\frac{७३६२३}{४३७५}\right|$ वा पंचमपरिधिः $\frac{३६८१६०}{२१८७५}$ पंचमफ-
लं $\frac{३३१३४४}{२१८७५}$ षष्ठव्यास ६ $\frac{३}{७}$ स्यपरिधिः $\frac{४४१७५२}{२१८७५}$
षष्ठफलम् $\frac{४०४९७६}{२१८७५}$ सप्तमव्यास ७ $\frac{१}{२}$ स्यपरिधिः
$\left|\frac{७३६३२}{३१२५}\right|$ वासप्तमपरिधिः $\frac{५१५४२४}{२१८७५}$ सप्तमफलम्
$\frac{४७८६०८}{२१८७५}$ सर्वफलैक्या $\frac{१८०३९८४}{२१८७५}$ $\frac{८}{६}$ $\left|\frac{९०१९९२}{२१८७५}\right|$
$\frac{२५}{१४}$ शेषफ. ४५ $\frac{५४२८८}{३०६२५}$
आदिव्यास १ $\frac{१}{१४}$ ध्रंजातं वृत्तक्षेत्रफलम् $\frac{१३५२९८८}{३०६२५}$

एतास्मिंस्त्वन्तिमव्यासं वृत्तव्यासं समं भवेत् वृत्तोत्था-
विस्तृतिर्भिन्नायत्र तत्र विचक्षणैः २१६ भिन्न भागा
न्वितस्यैव नान्त्यं कोष्ठं तु कल्पयेत्

## अथ गोलस्यपृष्टफल घनफलयोरुप-
## पत्तेरानयनक्रमउच्यते

वृत्तस्यांऽ त्रिलवं (४) चापसंख्या वृत्त दले भवेत् २१७ अ-
भिन्नेष्वास (चाप) संख्याभिश्चापसंख्याविभाजिता (इष्वासश्चापः) अभि
न्नेष्वास (चापः) पर्य्यन्तं लब्धमेकादि (१) भिर्हतम् २१८ कृत्वापृ-
थक् पृथक् चापाः स्युस्तेषां मौर्विका (ज्या) फलान् आनयेन्नि

जसांनि ध्येतत्फलं प्राक् फलान्वितम् २१९ कुलार्द्धे
विस्तृतिर्ज्ञेया सर्वैर्विस्तृतयो बुधैः नागाष्टभ्रांकवेद [४९०८८]
ग्रास्तत्वषड् [१५६२५] दिन भाजिताः २२० स्युर्वृत्तास्ते पृथङ्गि
घ्रा विस्तारैः सागरो [४] द्धृताः लब्धयोगं तु तद्गोल [गोलार्द्धे] खण्डे
घन फलोच्यते २२१ वृत्तानां संयुतिर्गोलखण्डे पृष्ठ
फलोच्यते अर्द्धयुग्माहतं [२] कृत्वा पूर्णगोल फलं भवेत्
२२२ यथा वृत्तं ३६० वृत्तार्द्धे १८० चापसंख्या ९०
अभिन्नधनुस्संख्या ९० भिन्नचापसंख्या ९० विभा-
जितालब्धम् १ अनेनैकादिकमभिन्नधनुः पर्य्यन्तं
हत्वा चापाः स्वांकसमाः ९० जाताः १।२।३।४
।५।६।७।८।९।१०।११।१२।१३।१४।१५।१६
।१७।१८।१९।२०।२१।२२।२३।२४।२५।२६।
२७।२८।२९।३०।३१।३२।३३।३४।३५।३६।३७
।३८।३९।४०।४१।४२।४३।४४।४५।४६।४७
।४८।४९।५०।५१।५२।५३।५४।५५।५६।५७
।५८।५९।६०।६१।६२।६३।६४।६५।६६।६७

६८।६९।७०।७१।७२।७३।७४।७५।७६।७७
।७८।७९।८०।८१।८२।८३।८४।८५।८६।८७
।८८।८९।९०। एवंक्रमादेषां जीवाफलानियथा प्रथ-
मस्यज्या भागमुरवा १।५९।५९ द्वितीयस्य ३।५९।५७
तृतीयस्य ५।५९।५० चतुर्थस्य ७।५९।३६ पंचमस्य
९।५९।१३। एवंसर्वेषांह्नियथा प्रथमकोष्टात्पूर्वं शू-
न्य० कोष्टंतत्फलंच शून्यं० प्रथमकोष्ट फल शून्यकोष्ट
फलयोरैक्या १।५९।५९ र्द्धं प्रथमकोष्टव्यासं जातं भा-
गमुरवं ०।५९।५९।३० द्वितीयकोष्ट ३।५९।५७ प्र-
थमकोष्ट १।५९।५९ फलयोगा ५।५९।५६ र्द्धं द्वि
तीयस्यव्यासं २।५९।५८ द्वितीय तृतीय योगार्द्धं तृ-
तीयव्यासं ४।५९।५३।३० एवंचतुर्थव्यासं ६।
५९।४३ पंचमव्यासं ८।५९।२४।३० एवंसर्वेव्यासाः
भवन्ति परिधीनांयोगंपृष्टफलं क्षेत्रफलानां योगं घ-
न फलंगोलार्द्धे भवति तद्द्विघ्नं पूर्ण फलं भवति एवंपं-
चकोट्यादि ५००००००० वृत्तगोलजेन घनफलेन

तथा पृष्ठफलेनानुपाताद्गोलस्य घनफलं पृष्ठफलं चा-
नयेदिति. अथ स्थूलजीवाद्यानयनमुच्यते.
वृत्तं चापोननिघ्नं तु ह्यग्राद्याह्वयमीरितम् वृत्तवर्ग-
हताग्रस्तां वेदांशांश्चाद्यवर्जिताः २२३ वेदांशांस्त-
त्फलेनाप्तमाद्यविस्तारयोर्वधं स्थूलज्या जायते.
*जीवाव्यासयोगान्तराहतेः २२४ मूलोनव्यासख-
ण्डं तु सूक्ष्मज्याव्यासजं स्फुटं बाणं स्यात्सूक्ष्मबा-
णोनाद्व्यासात्सूक्ष्मशराहतात् २२५ मूलं द्विघ्नं स्फु-
टव्यासात्सूक्ष्मज्याऽर्द्धकृतिं भजेत् सूक्ष्मेषुणाफ-
लं सूक्ष्मबाणाढ्यं व्यासमुच्यते २२६ तुर्य्यांशं वृत्त-
वर्गस्य पंचघ्नं जीवया हृतं वेदघ्नव्याससंयुक्तजीव-
यासं फलं भवेत् २२७ तत्फलं वृत्तवर्गस्य पादांशोपरि

---

*जीवा बाहुः व्यासः कर्णः अनयोर्वर्गान्तरं कोटिज्यावर्गः तज्ज्या-
व्यासयोर्योगान्तरघातसमः तन्मूलं सूक्ष्मकोटिज्या स्यात् सूक्ष्म
ज्याव्यासयोः योगांतराहतेः मूलं सूक्ष्मकोटिज्यास्यां भुजज्योत्था
एवं कोटिज्योत्था सूक्ष्मभुजज्या स्यात् सूक्ष्मकोटिज्यां वा भुज-
ज्यां व्यासे हित्वा तत्खण्डं सूक्ष्मशरः स्यात्

वर्जयेत् शेषमूलोन्मितं वृत्तखण्डं चापमुदीरितं (धनुः) २२८
स्थूलाचेन्मौर्विका(ज्या)ञ्चाप(धनुः)सूक्ष्मंसूक्ष्मज्यकायदि अत्रै-
तत्कार्मुकं(चापं)स्थूलं विज्ञेयंगणकोत्तमैः २२९ वृत्तं त्र्य
स्त्रपूर्वाणांतुल्यानांकोणसंख्यया भक्तस्तत्परिधिश्चा-
पंज्ञेयंतच्चापमौर्विकाम् २३० दैर्घ्यमुक्तं तयैकैकको-
णस्यैवहितत्तया एकैकस्यभुजस्यैवपरिमाणंनिगद्यते
२३१ यथाव्यासः ७ वृत्तंस्थूलं २२ धनुः ३ आद्यः
५७ वृत्तस्य २२ वर्गः ४८४ पंचाहतः २४२० वेदासः
६०५ आद्यहीनः ५४८ वेदांसः(४) फलं १३७ आद्य५७
विस्तार७चोर्वधं ३९९ फलेन १३७ भक्तंलब्धंस्थूल
ज्या २ $\frac{१२५}{१३७}$ अथयथाव्यासः १० जीवा ६ योगः १६
अन्तरं ४ घातः ६४ मूलं ८ व्यासे १० हित्वार्द्धं १शरः
१ व्यस्ताज्जीवा ६ व्यासश्च १० अथयथा व्यासः १४
जीवा ४ परिधिः ४४ वर्गः १९३६ वेदांशः ४८४ पंच-
घ्नः २४२० जीवया ४ हतः ९६८० वेदघ्नव्यासः ५६
जीवा ४ युक्तं ६० अनेन तद्भक्तंफलं $\frac{४८४}{३}$ वृत्त २२

वर्ग १९३६ पादे ४८४ हीनान्मूलं वृत्तार्द्धे हित्वा

स्थूलं धनुः वा ४ न्यासः  न्यासः 


न्यासः 

न्यासः 

न्यासः 


## अथसूचनम्

सूक्ष्मंजीवादिकर्म्मचसूक्ष्मवर्गपदंतथा सूक्ष्मंघन पदंचाग्रेज्योत्पत्तौकथयाम्यहम् २३२ उद्देशाकसमं राशीनांचक्रवृत्तेतुकोणाः (३६०) खांगगुणाः स्मृताः तास्मि-
०।०।० जीवांशाः ९।०।०
न्नर्द्धांशबाहुज्यात्वेककोणज्यकाभवेत् २३३ तत्राऽ र्थज्याकलाषष्टि (६०) तुल्या ज्ञेया विचक्षणैः

## अथ बंधमुख घनहस्ताकारस्य भा- ण्डस्यक्षेत्रफलानयनम्

वेधविस्तारयोगघ्नाद्दिघ्नदैर्घ्येणसंयुतम् २३४ वेध- विस्तारयोर्द्दिघ्नघातंकृत्वा विचक्षणैः तद्घनाकार-

भाण्डस्यज्ञेयंक्षेत्रफलंखलु २३५ यत्पात्रं विस्तारे २ दैर्घ्ये २४ वेधे ३ तस्य क्षेत्रफलं ५२ भवति अथवाक्षेत्रफलानामैक्यात्षड्भक्तान्मूलेविस्तारादीनां बन्धमुखकस्यसममानंस्यात् अथवा अबन्धमुखानां क्षेत्रफलैक्यात्तर्कांशा त्स्वषष्ठांशहीनान्मूलं बृहदेक भाण्डस्य बन्धमुखकस्यसममानंस्यात् बंधमुखानांक्षेत्रफलैक्यंतर्कांशंस्वांगांशान्वितान्मूलंबृहदेक भाण्डस्याबन्ध मुखकस्यसममानंस्यात् . इतिक्षेत्रव्यवहारः

## अथ खातव्यवहारः

अथ वेधादिपरिज्ञानंविधीयते नीचत्वमुच्चता पिण्डं गम्भीरं वेधमुच्यते सर्वत्र विषमक्षेत्रेस्वस्वजातिस्थलेषुच २३६ मापयेन्मापितैक्यन्तु मापितस्थानसंख्यया भक्त्वायथोचितंतुल्यंतल्लब्धं जायतेखलु २३७ दैर्घ्यविस्तारवेधानां घातं घनफलम्भवेत् क्षेत्राभिधंफलंवेधनिघ्नं घनफलम्भवेत् २३८

## अथखातेघनफलानयनम्

वेधक्षेत्रवधं तुल्यखाते घनफलं भवेत् उदाहरणं
यस्य खातस्य त्रिषु स्थानेषु दशैः शिवैः सूर्यैस्तुल्याः
दैर्घ्याः १०।११।१२ पंचैस्तर्कैरगैस्तुल्याः विस्ताराः
५।६।७ युग्माभ्यां त्रिभिर्वेदैरुन्मिताः वेधाः २।३।४
स्युस्तस्य घनफलम्वद न्यासः

७ १२ विषम ६ खातः ५
४ ११ ३ २
खातदर्शनं १०

११
६ तदेव सम खातः ६
वेधः ३
११

उक्तवत्करणात्समखाते दैर्घ्यं ११ विस्तारं ६ वेधः ३
एषां घातं घनफलम् १९८

## अथ वाटिकादि खातस्य घनफलानयनं

तलजं मुखजार्द्धं च क्षेत्रं वेधाभिमर्द्दितम् २३९ क्र
त्वानयोस्तु संयोगं फलं स्याद्वाटिकाघनम् तुल्यखात
फलत्र्यं[३]शः सूचीखाते फलम्मतम् २४० उदाहरणं
यस्याः वाप्याः मुखे दैर्घ्यं हस्तैः सूर्योन्मितं तथा वि-
स्तारे दश हस्तोन्मितं तले दैर्घ्यं तर्कोन्मितं विस्तारं पं-
च हस्तोन्मितं वेधं सप्त हस्तोन्मितं तस्याः घनफलं वद

न्यासः

| | | |
|---|---|---|
| दै २ क्षेत्र १५/२<br>वि ५/२ क्षेत्र १५/२ घनं १०५/२ | दै १२ दै ६ क्षेत्र १५, घनं १०५/२ दै ६ | दै २ क्षे· १५/२ घन १०५/२<br>वि ५/२ क्षेत्र १५/२ |
| क्षेत्र १५ १० घनं १०५/२ | वि· ५, क्षेत्र ३० पूर्णघन वेधः ७ घनं २१० | वि· ५ क्षेत्र १५, घनं १०५/२ १० |
| २ क्षेत्र १५/२ ५/२<br>क्षेत्र १५/२ घ· १०५/२ | दै· ६ क्षेत्र १५ घनफ· १०५/२ दै १२ | २ क्षेत्र १५/२ ५/२<br>क्षेत्र १५/२ घनं १०५/२ |

सर्वघनफलैक्यम् ६३०

मुखे दैर्घ्यं १२ विस्तारं १० तले दैर्घ्यं ६ विस्तारं ५ वेधः ७ तलजं क्षेत्रफलं ३० मुखजं क्षेत्रफलार्द्धं ६० तौ क्षेत्रफलौ वेधघ्नौ जातौ २१०।४२० अनयोर्योगम् ६३० घनहस्तफलं ६३० उदाहरणं यस्य समखातस्य दैर्घ्यं हस्तद्वयं तथा विस्तारं हस्तद्वयं वेधं तर्क हस्तोन्मितं तस्य घनफलं वद तत्तुल्यस्य सूचीखातस्य घनफलं वद तथा यस्य वृत्तखातस्य व्यासं रसोन्मितं वेधं वेदोन्मितं तस्य घनफलं वद तथा वृत्तखातस्य सूचीखातफलं वद न्यासः

| | | |
|---|---|---|
| २ | वेधं ६ | २ |

दैर्घ्यं २ वि-

स्तारं २ वेधः घनफलं २४ घनहस्ताः २४ सूचीखात फलार्थं न्यासः दैर्घ्यं २ विस्तारं २ वेधः ६ घनफलं ८ अथ वृत्तखातफलार्थं न्यासः







व्यासः ७ वेधः ४ परिधिः २१ $\frac{१५४९१}{१५६२५}$ क्षेत्रफलं ३८ $\frac{७५७८}{१५६२५}$ घनफलं १५३ $\frac{१४६८७}{१५६२५}$ अथ वृत्त सूचीखात फलार्थं न्यासः




व्यासः ७ परिधिः २१ $\frac{१५४९१}{१५६२५}$ वेधः ४ घनफलं ५१ $\frac{१४६८७}{४६८७५}$

इति खातव्यवहारः

## अथ चितिव्यवहारः अथभित्तेर्घनफलानयनम्

हत्वाक्षेत्रफलं भित्तेरुच्छ्रयेण घनं भवेत्

भित्तिस्थेदिष्टिकानांतु हीष्टिका घन भाजितं २४१

भित्तेर्घनफलं भित्ते रिष्टिकानाम्मिति र्भवेत् स्युस्तरा

उच्छ्रयं भित्तेरिष्टिकोच्छ्रय भाजितम् २५२ एवमश्म

चिते रश्मान् विज्ञेयं पाण्डितोत्तमैः उदाहरणं यस्या-

इष्टिकायाः दैर्घ्यं पादोनैकहस्तोन्मितम् विस्तारमर्द्धह-
स्तोन्मितं वेधं हस्ताष्टमांशं चेदिष्टिकाघनं वद यस्यां
भित्तौ दैर्घ्यं वेदमितं हस्तौ विस्तारं त्रिकरोन्मितं वेधं युग्मो-
न्मितं तत्रं चितिघनं चिता विष्टिका संख्यांच वद इ-
ष्टिकान्यासः दैर्घ्यं $\frac{३}{४}$ विस्तारं $\frac{१}{२}$ वेधः
$\frac{१}{८}$ इष्टिकाघनं $\frac{३}{६४}$ चितिन्यासः
दैर्घ्यं ४ विस्तारं ३ वेधः २ भित्ते-
र्घनफलम् २४ इदमिष्टिकाघनेन $\frac{३}{६४}$ भक्तं चिता
विष्टिकामितिः ५१२ चितौ तरास्च १६ एवं पाषाणच-
येपि इति चितिव्यवहारः समाप्तः

## अथ क्रकचव्यवहारः

दैर्घ्यं वेधाहतं दारो रेखाढ्यैर्दारिणस्थलैः २४३ हत्वाक्षे-
त्रफलं सर्वपट्टानां जायते खलु उदाहरणम् यद्दारोरे-
कपट्टस्यपिण्डं मूले हस्तोन्मितमग्रे भूपांगुलोन्मितं दै-
र्घ्ये त्वेकत्रांगहस्तोन्मितमन्यत्राब्धिकरोन्मितं तत्स्था-
नचतुष्केषु दार्यंते चेत्तत्पट्टानां क्षेत्रफलैक्यं वद न्यासः

पट्टः




दैर्घ्यं ६ दैर्घ्यं ४ पिण्डे १/१ २/३ दारणस्थानसंख्या ४ अत्र दैर्घ्ययोर्योगं १० द्विभक्तं दैर्घ्यः ५ पिण्डयोगं ५/३ द्विभक्तंपिण्डः ५/६ दैर्घ्यपिण्डाहतिः २५/६ एकाद्यदारणस्थलै ५ र्गुणिताः १२५/६ तत्पट्टानांक्षेत्रफलयोगं जातं १२५/६ हरभक्तं २० ५/६

## अथक्रकचान्तरकर्मम्

वेधविस्तारयोर्घातमेकाद्यैर्दारणस्थलैः २४४ हत्वातिर्य्यक्त्कयादारुदार्य्यतेचेत्फलं भवेत् उदाहरणं यस्यैक पट्टस्यदारो विस्तारं सार्द्धहस्तोन्मितं पिण्डहस्तद्वयं तत्स्थानत्रयेषुतिर्य्यक्त्कया विस्ताररूपेणदार्य्यतेचेत्तत्पट्टानांक्षेत्रफलं सर्ववद




न्यासः ३/२ २/१ दारणसंख्या

३ सैका ४ पिण्डः २ विस्तारः ३/२ वधं ३ सैक दारण
घ्नं १२ क्षेत्रफलैक्यम् १२

## अथान्योन्यफलानयनविधिरुच्यते

नीचोच्चकुलयोर्मध्येयद्गुणस्तद्घनाहतम् २४५ उत्तम-
स्यघनंतत्तु नीचजातिघनंभवेत् नीचोच्चवंशयोर्मध्ये
यद्गुणंतद्घनोद्धृतम् २४६ नीचजातिघनंलब्धमुच्च-
जातिघनोच्यते यद्गुणंवंशयोर्मध्ये तद्वर्गेणसमाहतम्
२४७ उच्चक्षेत्रफलंतच्च नीचक्षेत्रफलोच्यते यद्गुणं
कुलयोर्मध्येतत्कृत्यापरिभाजितम् २४८ नीचक्षेत्रफ-
लं लब्धमुच्चक्षेत्रफलोच्यते उच्चजातिघनान्नैव नीच
क्षेत्रफलं भवेत् २४९ नीचक्षेत्रफलाच्चापितूत्तमस्य
घनंनहि उच्चक्षेत्रफलात्तद्वन्नीचजातिघनंनहि २५०
नीचवंशघनाच्चापितूच्चक्षेत्रफलंनहि.

## अथकाष्टविदारणकर्मणिभाटकफले क्षेत्रफलज्ञानमुच्यते.

वेधदैर्घ्याहतिर्दारैरभ्यस्त दारणस्थलैः २५१ दारणी-

यफलंज्ञेयंतद्विदारणाकर्म्मणि वेधविस्तारयोर्घात
मभ्यस्तंदारणस्थलैः २५२ तिर्य्यक्तयातु तद्दारोर्दार
णेतत्फलं भवेत् उदाहरणं यस्यैकपट्टस्य दारोर्दैर्घ्यंपं-
चहस्तोन्मितं पिण्डं हस्तद्वयं तत्स्थानत्रयेषु दैर्घ्यरू-
पेणदार्य्यते चेत्तद्घाटकायक्षेत्रफलंवयंवद न्यासः दै-
र्घ्यः ५ वेधः २वधं १० दारणस्थानैः ३ हत्वाजातंदा-
रणीयफलम्३० उदाहरणं यस्यैकपट्टस्यदारोःपि-
ण्डंहस्तद्वयोन्मितं हस्तोन्मितंतुविस्तारं तत्तिर्य्यक्त
याचतुर्षुस्थानेषुदार्य्यते चेत्तद्दारणीयफलंवद न्या-
सः पिण्डः२ विस्तारं१ वधं२ दारणस्थानैः ४ हत्वा-
जातं दारणीयफलम्८ इतिक्रकच व्यवहारः

## अथ राशिव्यवहारः

मध्येधान्यादिराशीनांयत्सूत्रमग्रवृत्तयोः २५३त-
द्वर्गाद्वृत्तजव्यासखण्डवर्गोनितात्पदम् वेधः स्याद्वृ
त्तषष्ठांशवर्गवेधवधंबुधैः २५४ स्थूलं घनफलंज्ञे-
यंवावृत्तव्यासयोर्वधं वेधघ्नं भास्करात्तं स्यात्सूक्ष्मं

राशिं घनं फलम् २५५ उदाहरणम् यस्य धान्यादिराशेर्वृत्तं द्वादशहस्तोन्मितं वेधसत्र्यंशैक हस्तोन्मितं तस्य घनफलं वद न्यासः

राशिः

परिधिः १२ वेधः $\frac{४}{३}$ स्थूलं घनफलं $\frac{१६}{३}$ परिधिः १२ व्यासः ३ $\frac{१००५९}{१२२७२}$ सूक्ष्मं घनफलं ५ $\frac{८५५}{९२०४}$

व्यासः $\frac{४६८७५}{१२२७२}$ घनफलं $\frac{४६८७५}{९२०४}$

**अथ पादोनार्द्ध पादराशीनां फलानयनमुच्यते**

सत्रिभागैकयुग्माब्धिनिघ्नात्तु परिधेः फलम् स्यात्पादोनार्द्ध पादांशराशेः स्वगुण भाजितम् २५६ उदाहरणं यद्राशिवृत्तं द्वादशहस्तसमं तद्राशेः पादोनार्द्ध पादांशघनफलान्वद न्यासः

पादोनं ९

पादोन वृत्तं ९ तद्गुणकः $\frac{४}{३}$ गुणघ्नं पादोन वृत्तंपूर्णपरिधिः १२ तस्मात्प्राग्वज्जातं घनफलं ५ $\frac{८५५}{९२०४}$ गुणं $\frac{४}{३}$ भक्तं जातं घनफलम् ३ $\frac{१००५९}{१२२७२}$ **अथार्द्धराशेः** न्यासः

अर्द्धराशिः ६

गुणः २ पूर्णपरिधिः १२ तद्घनफलं ५ $\frac{८५५}{९२०४}$ गुणः २ भक्तं जातं घनफलं २ $\frac{३३५३}{६१३६}$

**अथ पादराशेः** न्यासः

पादं ३

गुणः ४ पूर्णपरिधिः

१२ तद्घनफलं ५ $\frac{८५५}{३२०४}$ गुणः ४ भक्तं जातं पादराशे
र्घनफलं १ $\frac{३३५३}{१२२७२}$ अथराशिफलोपपत्तिरुच्यते
भक्त्वावेधमभिन्नेनतेनवेधेनयत्फलम् तेनचैकादिनि
घ्नेनव्यासंहत्वासमुद्धरेत् २५७ पूर्णवेधेन विस्ताराःस्यु
र्वेधान्तमितिक्रमात् विस्तारमन्तिमंचात्रपूर्णव्यास
समंभवेत् २५८ भिन्नांशयुक्तवेधस्य नान्तिमं कोष्टमा-
चरेत् शून्यवेधस्यविस्तार वृत्तोशून्यौ स्मृतौबुधैः २५९
शून्यप्रथमयोर्व्यासयोगंयुग्मोद्धृतंफलम् तज्ज्ञेयंप्रथमं
चाथविस्तारंप्रथमस्यच २६० द्वितीयव्यास संयुक्तं कृ
त्वार्द्धस्याद्द्वितीयकम् द्वितीयव्यासंसंयुक्तां तृतीयविस्तृ
तिंतथा २६१ कृत्वार्द्धंतत्तृतीयाख्यंविज्ञेयंगणकोत्त-
मैः तृतीयविस्तृतिंयुक्त्वा चतुर्थविस्तृतौबुधैः २६२
कृत्वाखण्डंचतुर्थाख्यंस्यात्फलंचैवमेवहि तत्पूर्वव्या-
सखंडंतुफलमाद्याह्वयंमतम् २६३ द्विघ्नमाद्यंध्रुवं
ज्ञेयमाद्यंतद्ध्रुवकान्वितं द्वितीयाख्यंफलंज्ञेयंताद्द्विती-
यंध्रुवान्वितं २६४ तृतीयाख्यंफलंज्ञेयं तृतीयंचध्रुवा

वान्वितं चतुर्थरव्यं फलं ज्ञेयमेवं सर्वे थवा फलाः २६५

४९०८८ १५६२५

अष्टाष्टाभ्रांकसिंधुघ्नास्ते ते स्वस्वफलाभिधाः तत्वषड्बा

परिधयः परिधि

सरैर्भक्ता जायन्ते कुण्डलाः खलु २६६ कुण्डलव्यासयो

र्घातं वेदाप्तं क्षेत्रमीरितम् क्षेत्राणां संयुतिं कृत्वा स्याद्राशि

घनं फलम् २६७ कुण्डलानां युतिश्चात्र राशेः पृष्टफलं भ-

वेत् वेधवृत्तवधार्द्धं वा राशेः पृष्टफलं भवेत् २६८ यथारा

शिपरिधिः ३६ व्यासः $\frac{५६२५००}{४९०८८}$ वेधः ४ अभिन्नवेधेन

४ भक्तः फलं १ एवमुक्तवद्वेध ४ पर्यन्तव्यासाः प्रथम

व्यासः $\frac{१४०६२५}{४९०८८}$ द्वि० व्या० $\frac{२८१२५०}{४९०८८}$ तृ० व्या० $\frac{४२१८७५}{४९०८८}$

चतुर्थव्यासः $\frac{५६२५००}{४९०८८}$ स्पष्टव्यासा एव फलानि अत्रो

पयोग्यानि प्रथमफलम् व्यासः $\frac{१४०६२५}{९८१७६}$ द्वि० फ० व्यासः $\frac{४२१८७५}{९८१७६}$

तृती० फ० व्यासः $\frac{७०३१२५}{९८१७६}$ चतुर्थफलम् व्यासः $\frac{९८४३७५}{९८१७६}$ अथ-

कुण्डलानि प्र० परिधिः $\frac{६९०३}{१५३४}$ द्वि० परिधिः $\frac{२०७०९}{१५३४}$ तृती० परिधिः $\frac{३४५१५}{१५३४}$

चतुर्थ० परिधिः $\frac{४८३२१}{१५३४}$ अथ क्षेत्रफलानि प्रथमः क्षेत्रफ० $\frac{९७०७३४३७५}{६०२४०७९३६}$

द्वि० क्षेत्रफ० $\frac{८७३६६०९३७५}{६०२४०७९३६}$ तृती० क्षेत्रफ० $\frac{२४२६८३५९३७५}{६०२४०७९३६}$ चतुर्थ०

क्षे० फ० $\frac{४७५६५९८४३७५}{६०२४०७९३६}$ क्षेत्रफलैक्यं राशेर्घनफलम्

| ८१५४१६८७५०० |
|---|
| ६०२४०७९३६ |

हरभक्तं जातं घनफलं १२५ $\frac{५४१५४०३५}{१५०६०१९८४}$ व्या. $\frac{५६२५००}{४९०८८}$ वृत्तं ३६ घातः

१२५ $\frac{५४१५४०३५}{१५०६०१९८४}$ अथवा व्यासवृत्ताहतिः $\frac{२०२५०००}{४९०८८}$

अस्यास्त्र्यंशः राशेर्घनफलंवा १३७ $\frac{१५५९}{३०६८}$ राशेः पृष्ट-

फलं ७२॥ इष्टाऽकस्याऽधसंकुलं कृत्वा तस्य फलात्फलं

इष्टांऽकस्यानयित्वा तु तत्सूक्ष्मं जायते फलं २६९

## अथ राशेः स्थूलफलोपपत्तिः

वृत्तत्रिमांशकं[३] यत्तद्विस्तारं[व्यासे] स्थूलमुच्यते तेन घ्नं वृत्त[परिधेः]पादांशं[४]

स्थूलक्षेत्रफलं भवेत् २७० क्षेत्रं वेधाहतं कृत्वा वृत्तखात

समं फलम् विज्ञेयं तद्गुणै[३]र्भक्तं स्थूलं राशिफलं भवेत् २७१

यथा राशिपरिधिः ३६ स्थूलव्यासं १२ वृत्तपादं ९ वेधः ४

वृत्तपादाहतं व्यासं वृत्तक्षेत्रफलं १०८ वेधाहतं वृत्तखा-

तसमं घनफलं स्थूलं ४३२ तत्र्यं[३]शं वृत्तखातस्य सूचीखा-

तसमं राशेः स्थूलं घनफलम् १४४ इति राशिव्यवहारः समा०

## अथच्छायाव्यवहारः

छाययोः कर्णयोश्चाऽपि भेदयोर्वर्गयोस्तयोः भेदाप्तं द्विघ्नं[२]

शंकोस्तु वर्गलब्धिस्तदुच्यते २७२ सैकलब्धेः[१] पदेन घ्नं

कर्णयोरन्तरंद्विधा छाययोरन्तरेणोनयुक्तमर्द्धे प्रभेस्मृते २७३ छाययोर्योगवर्गेतु कर्णयोरन्तरस्यच वर्गस्यैवान्तरं कृत्वातेनाप्तंद्वि[2]घ्नशंकुजं २७४ वर्गंतत्सैकलब्धस्य मूलंकर्णान्तराहतम् द्विस्थं[12] भैक्येन विश्लेषयोगमर्द्धे प्रभेस्मृते २७५ कर्णयोश्छाययोश्चैवयोगवर्गान्तरोद्धृतम् यद्वर्गंद्वि[2]घ्नशंकोस्तुलब्धस्यैकां[1]न्तरात्पदं २७६ कर्णयोगाहृतंद्विस्थं[2] भैक्येना(पायायोगेन)ऽयोगसंयुतिम् कृत्वाखण्डे प्रभेस्याताां छाययोऽ(ऽतरस्य)रन्तरस्यच २७७ वर्गेकर्णैक्यवर्गस्य भेदं कृत्वाहरोभवेत् द्वि[2]घ्नशंकुकृतिं भक्त्वा छेदेनफलरूपयोः[1] २७८ भेदमूलाहृतंकर्णयोगं द्वि[2]स्थापितंतयाभाभेदेनान्तरयुतिंकृत्वाच्छाऽर्द्धे प्रभेस्मृते २७९ उदाहरणम् एकदीपप्रकाशेषोडश[16]षोडश[16]भागांकितयोः कीलयोश्छाययोरन्तरस्त्र्य[18]ष्टेन्दुप्रमितं कर्णयोरन्तरं शक्र[14]प्रमितंचेत् छायेवद अथवा भैक्य(छायायोग)द्व्यब्धि[42]मितं कर्णान्तरं शक्रो[14]न्मितं चेत् छायेवद अथवा भा(छा)योगं द्व्यब्धि[42]मितं कर्णयोगंवेदास्[54]समंचेत् छायेवद अथवा छायान्तरं[18]

नागेन्दुमितं कर्णयोगं वेदाक्षि ५४ प्रमितं चेत् छायेवद न्यासः




शंकुः १६ शंकुः १६ भान्तरं १८ कर्णान्तरं १४ अनयो-
र्वर्गान्तरेण १२८ संहृद्विघ्नशंको ३२ वर्ग १०२४ लब्धं ८ से-
कं ९ मूल ३ घ्न कर्णान्तरे ४२ भान्तरं १८ युक्तोनार्द्धे जाते
छाये ३०।१२ कर्णौ ३४।२० अथवा शंकू १२।१२ भांत
रं ४ कर्णान्तरं २ छाये ५।९ कर्णौ १३।१५ कर्णयोगः
२८ वर्गः ७८४ छायायोग १४ वर्गः १९६ द्विघ्न शंकु २४
वर्गः ५७६ छायान्तर ४ वर्गः १६ कर्णान्तर २ वर्गः ४

## अथ छायान्तरक्रमः

नावियुक् दीपकोच्छ्रायसंशंकुदीपतलान्तरघ्नशंकुघ्नशं-
कुभाज्ञेया छा दीपशंकुतलान्तरम् २८० शंकुघ्नभाहृतं

शंकुयुक्तं दीपौच्च्यमुच्यते दीपौच्च्य नरयो र्भेदं कृत्वा
तच्छायया हृतम् २८१ तत्कीलासं फलं दीपकीलयोः स्या-
त्तलान्तरम् भाग्रयोरन्तरं छाभा भाभेदाप्ता धरा भवेत्
२८२ तद्भूमिनरयोर्घातं भाप्तं दीपौच्च्यमुच्यते शंकु-
घ्नावस्तु भा शंकोरा भया सा फलं भवेत् २८३ तद्वस्तो
रुच्चता ज्ञेया वस्तुघ्ना शंकुभा थवा तद्वस्तोरा भया भ-
क्ता शंकुः स्यादनुपाततः २८४ दृक्सूत्रं दृष्टिकर्णः
स्याद्धा भूबाहुश्च भूर्भवेत् कोटयग्रं दृग्गृहं स्वेष्टदेशा-
तुल्य क्षितौ भवेत् २८५ तद्दृग्गृहन्तु शैलाग्रं वृक्षाग्रं दीप-
कस्थलं छायाग्रे स्वस्थलं किम्वा कोटयग्रे स्वस्थलं भ-
वेत् २८६ कोटयग्रे स्वस्थलं यत्र छायाग्रे दृग्गृहं भवेत्
तद्दीपौच्च्यकृतौ दीपतल भाग्रान्तरस्य च २८७ वर्गैक्या
द्धं च तन्मूलं दृक्कर्णं तदुदीरितम् गम्यागम्य दृग्गृहान्तं
भेदं तत्स्वस्थलाद्भवेत् २८८ उदाहरणं दीपौच्च्यं द्वा
दशैस्तुल्यं यत्र दीपतल भूमिस्थानादामोन्मिते स्थाने भू
मौ अष्टसमं कील मूर्द्धीकृतं चेत्तत्कीलस्या भांवद

अथवा द्वादशैव दीपौच्च्ये वेदोन्मितेशंकुदीपयोस्तला
न्तरे नवभागतुल्यं शंकु मूर्ध्वीकृतं चेत्तच्छंकोराभां वद

न्यासः शंकुः ८ तलयोरन्त-
रं ३ दीपौच्च्यं १२ उक्तवत्कर-



णाज्जाता शंकुछाया ६ छायाशंकुभ्यां जातः कर्णः
१० छायाग्रदीपतलान्तर ९ दीपोच्छ्रितिभ्यां जातं पूर्णक-
र्णं १५ न्यासः दीपौच्च्यं १२ तलां
तरं ४ शंकुः ९ जाताशंकुछा



या १२ उदाहरणं छायाशंकुतलान्तरैर्दीपौच्च्यं वद तथा
छायाशंकुदीपौच्च्यैस्तलांतरं वद न्यासः छाया ६ शं-
कुः ८ तलान्तरं ३ जातं दीपौच्च्यं १२ न्यासः छाया ६
शंकुः ८ दीपौच्च्यं १२ जातं तलांतरं ३ उदाहरणं दी-
पप्रकारो दीपतलात्किंचिद्दूरे द्वादशांगुलं शंकुमूर्ध्वीकृ
तं चेत्तच्छाया चाष्टां८गुलोन्मिता जाता ततस्तस्मिन्ने
व सूत्रे तच्छंकुस्थानात्सपादैक $1\frac{1}{4}$ हस्तोन्मिते दूरे
द्वादशांगुलं शंकुं स्थाप्य तच्छाया वेदयुग्मां २४ गुलस-

माजाताचेद्दीपोच्च्यं तथा शंकुदीपतलान्तरं वद न्यासः




अग्रांतरं ४६ शंकुः १२ छाया ८ शंकुः १२ छाया २४ प्रथमछायाग्रदीपतलान्तरं २३ द्वितीयछायाग्रदीपतलान्तरं ६९ दीपौच्च्यं ३४ $\frac{1}{2}$ प्रथमशङ्कुतलदीपतलान्तरं १५ द्वितीयशंकुतलदीपतलान्तरं ४५ प्रथमपूर्णदृक्कर्णवर्गः $\frac{६८७७}{४}$ द्वितीयपूर्णदृक्कर्णवर्गः $\frac{२३८०५}{४}$ .

## अथदीपोच्च्यशङ्कुभ्यांदृक्कर्णपूर्णभुजयोरानयनम्.

शंकुवर्जितदीपोच्च्यकोटिजं दृक्श्रवस्पृशन् बाहुंप्रकल्पयित्वातुतद्भुजस्यकृतौबुधैः २८९ दीपौच्च्यनरविश्लेषवर्गमाद्यैवतत्पदम् दीपोच्च्यैन नरोनेन भक्त्वादीपोच्च्यताडितम् २९० तद्दृक्कर्णोभवेद्बाहुं हत्वादीपोच्च्यकेन च विनृप्रदीपकौच्च्येन भक्त्वास्यात्पूर्णदोर्धरा २९१ दृक्कर्णानयनार्थंवा कोटिं दीपौच्च्यसंज्ञकां कल्पयेत्स्वस्थले हीष्टांतुल्येकौच भूमौ प्रसारिताम् २९२ दोर्भु

मिंदीपकौच्च्यंवादीपौच्च्यं दोर्धरांबुधैः नरदीपोच्च्यभे-
दंभां शंकुदीपतलान्तरम् २९३ शंकुकल्पितबाहुस्वा
शंकुकाग्रं निजस्थलं ध्यात्वा हक्कर्णमानन्तु त्वानयेदुक्त
वद्बुधः २९४ इतिछायाव्यवहारः

## अथांकाऽवयवानयनम्.

इष्टांकस्याऽवशेषंतु दशसंगुणं हरोद्धृतं तत्फलं दशमां
शः स्यात्तच्छेषं दशताडितम् २९५ हारासंतच्छतांशः
स्यात्तच्छेषंच दशाहतम् हारासंतत्सहस्रांशं तच्छेषं
चदशाहतं २९६ हारासमयुतांशः स्यात्तच्छेषं दशसंहि
तम् हारासंलक्षकांशः स्यात्तच्छेषं दशसंगुणं २९७ हारा-
संप्रयुतांशः स्यात्तच्छेषं दशताडितम् हारभक्तं फलंय-
त्तत्कोट्यंशं परिकीर्त्तितम् २९८ एवं शेषं दशसंगुणं हा-
रासंचपुनः पुनः अर्बुदांशादिकं ज्ञेयमंकस्याऽवयवं
खलु २९९ उदाहरणम् खासविश्वहरेणासमंऽकंसाऽ
वयवंवद न्यासः भाज्यः ५० भाजकः १३ लब्धं ३ दशां
शं ८ शतांशं ४ सहस्रांशं ६ लक्षांशम् १ एवं ५।८।४

६।१।५।८।४।६।१।५।८।४।६।१ एतद्यथाक्रमं वा ३।८४६१५८४६१५८४६१५८४६१ इत्यंकाऽवयवानयनम्. अथ गणितपाशव्यवहारः भेदाःस्युर्देशघातंतुतच्चांकैक्येनमर्द्दितं देशासंदेशतुल्यंतंस्थानवृद्ध्याहिसंयुतं ३०० कृत्वासंख्यायुतिस्तत्रविज्ञेयागणकोत्तमैः उदाहरणम् द्विकाष्टकाभ्यांसंख्या भेदान्संख्यैक्यंवद तथात्रिकनवकाष्टकैस्संख्या भेदान्संख्यैक्यंवद तथायुग्मादिपञ्चान्तैः संख्या भेदास्संख्यैक्यंवद तथाद्वैकाद्यष्टपर्य्यन्तैस्संख्या भेदान्संख्यैक्यंचवद न्यासः २।८ अत्रदेशद्वयं १।२ घातः २ जातौ संख्या भेदौ २ यथा २८।८२ अथस एव घातो२ कैक्य १० घ्नः जातः २० देशसंख्यया २ भक्तः फलं २० देशद्वये स्थानवृद्ध्यायुक्तंजातं ११० संख्यैक्यं ११० द्वितीयन्यासः ३।९।८ अत्रदेशाः १।२।३ घातः ६ भेदाः ६ यथा ३९८।३८९।८९३।८३९।९३८।९८३ अंकानांयोगेन २० निघ्नाः १२० देशत्रयेण भक्ताः फलं ४० स्थान

वृद्धया देशात्रयेयुक्त्वा ४००० जातसंख्यैक्यं ४४४०
तृतीयन्यासः २।३।४।५ देशाः १।२।३।४ वधं २४ भेदाः
२४ संख्यैक्यं ९३३२४ चतुर्थन्यासः १।२।३।४।५ भे-
दाः १२० अंके १।२।३।४।५ क्य १५ घ्ना १८०० देशा-
साः फलं ३६० संख्यैक्यं ३९९९९६०

## अथ विशेषभेदानयनम्.

यावद्देशेषुतुल्यांकास्तत्प्रकारैः पृथक्कृतैः ३०१ प्राग्भेदा
उद्धृता भेदास्तत्संख्यैक्यंच पूर्ववत् उदाहरणम् द्विद्वे-
कचन्द्रैस्तथायुग्माष्टपंचेष्वक्षैः संख्याभेदान्संख्यै
क्यंवद न्यासः २।२।१।१ अत्र प्राग्वद्भेदाः २४ अत्र
देशद्वयेतुल्यांकौतर्हि प्राग्देशद्वया ज्जातौ भेदौ २।२ प्रा
ग्भेदाः २४ समभेदयोग ४ भक्ताः फलं ६ जाताः भेदाः
६ तद्यथा २२११।२१२१।२११२।१२१२।१२२१।
११२२। प्राग्वत्संख्यैक्यंच ९९९९ अपरन्यासः ४।
८।५।५।५ प्राग्वद्भेदाः १२० देशत्रयोत्थभेदै ६ भक्ताः
फलं २० जाताः भेदाः २० तद्यथा ४८५५५।८४५५५।५४८५५

एवंविंशान्मिताः ज्ञेयाः संख्यैक्यंच ११९९९८८

## अथांकपाशान्तरम्

एकैकेनोन संस्थानित्यंकानि यदित्तत्रच ३०२ अंकाना
माहतिर्धीरैस्संख्या भेदाउदीरिताः उदाहरणम् एकैक
हीनषड्देशास्थितांकानांसंख्याभेदान्वद न्यासः ९।८
।७।६।५।४ एषांघातेजाताः संख्याभेदाः ६०४८०
अथांकपाशान्तरम् निरंकंचांक संयोगाद्व्येकादेके
कंवर्जितान् ३०३ व्यस्तानेकोनदेशेषु विन्यस्यैवक्र
मास्थितैः भक्ताद्येकस्थलैः क्रौघैस्तान्भेदाः स्युस्तुतद्ध्रुवं
३०४ उदाहरणम् पञ्चदेशस्थैर्यद्योगोविंश्योन्मितं
भवति तत्संख्या भेदान्वद न्यासः अत्रांकैक्यं १३
व्येकं १२ देशाः ५ व्येक देशाः ४ अंकैक्यं १३ व्येकं १२
एतन्निरेक स्थानान्तम् ४ एकैक रहितं विन्यस्य १२।११।
१०।९ क्रमस्थैरेकादिभिर्भक्त्वा $\frac{12}{1}$ । $\frac{11}{2}$ । $\frac{10}{3}$ । $\frac{9}{4}$ | घातंसंख्या
भेदाः ४९५ इत्यंकपाशः ३०४. **श्रीलक्ष्मीवल्लभात्मजप्रे-
मवल्लभविरचिते परमसिद्धान्ते गणितभागाधिकारः प्रथमः**

## अथ घट्यादिमानानि

प्राणैः खांगाग्नि भिर्लिप्तास्यात्तत्षष्ट्या दिनं भजम् स्या
न्मासंसावनंत्रिंशद्वासरैः सावनैर्भवेत् १ त्रिंशद्भिस्ति
थिभिश्चैकंचान्द्रमासमुदीरितम् सूर्यसंक्रमयोर्मध्ये
सौरमासंमुदीरितम् २ स्वमासैर्द्वादशैर्वर्षं विज्ञेयंगण
कोत्तमैः सौरवर्षनराऽब्दः स्यात्स्यात्सौराऽब्दोऽर्कवत्स
रः ३ सौराऽब्दंसुरदैत्यानां घस्त्रंदिव्यंदिनं भवेत् दिव्यैः
खांगाग्निभि ३६० र्घस्त्रैर्वर्षः स्याद्देवदैत्ययोः ४ तदेव
दिव्यवर्षः स्याद्दिव्याऽब्दैः खखखराऽर्कभिः स्याद्युगस्त
सत्य १७२८००० त्रेत १२९६००० द्वापर ८६४००० कलिः ४३२००० युगं ४३२००००
त्कृतादीनामल्यानामैक्यमुच्यते ५ तद्युगस्यदशांशस्तु
चतुस्त्रिद्व्येकताडितः क्रमशः सत्यपूर्वाणामल्पाना
म्मितयोमताः ६ सत्येत्रेतायुगेचैव द्वापरेचकलौतथा
संधिः सूर्यांशकंस्वस्वप्रारम्भदिवसोन्तरम् ७ स्वस्व
पूर्णदिनात्पूर्वमेवंसंधिः स्मृतोबुधैः सत्याद्यैक्यंयुगंदि
व्यंयुगैर्दिव्यैः खखवांगुलैः ८ स्याद्ब्रह्मणोहर्न्निशांतस्य
त्रिंशद्भिर्मासमुच्यते तैरर्कैर्वत्सरंज्ञेयंतैः शतैरायुरु

च्यते ९ ब्रह्मणस्त्वायुषश्चैवयाताः पूर्वार्द्धवत्सराः पंचा
शद्वोग्यवर्षाणाम्मध्येऽयंप्रथमंदिनं १० ज्ञेयंब्रह्मदिने
१४४०००१२०
यातसौराऽब्दाः परिभाजिताः प्रयुतघ्नैर्युगैस्त्रैः स्युर्लि-
४३२००००००
प्ता ब्रह्मदिनेगताः ११ कोटिघ्नैर्द्वर्थनिर्वेदाब्दैर्ब्राह्मिंकल्पं
नृणां भवेत् तदेवब्रह्मणो घस्त्रमानंत्रिंशत्कलोन्मितं १२
सूर्योदयो त्तथान्नृणामुद्यमाद्या भवन्तिहि रात्रौस्वा
पादिकंतद्द्ब्रह्मणः परिकीर्त्तितः १३ शयनेप्रलयंतस्य
मरणे विलयं भवेत् यथारात्रिद्युमानौस्तस्तथामरणजी-
वनौ १४ यद्वत्कुम्भकराः कृत्वासचक्रान्मृत्तिकाघटान्
स्वार्थंकुर्वंतिह्येत्थंतु नित्यंकुम्भक्षयोद्भवे १५ यथाचैकं
कचक्रंतुकुर्वंतिघटकारकाः देहाऽवसानपर्य्यन्तं यत्ना
च्चक्रःस्थिरोभवेत् १६ ततस्तद्विलयंयातिह्येवंतद्द्विधै
रपि भूः स्थिरामृत्समाः प्राणा जीवाः कुम्भसमाःस्मृ-
ताः ७७ भूगोलाद्दूरसंस्थत्वान्नित्यमाप्रलयंरविं पश्य
त्येवहिलोकेशस्तस्माद्ब्रह्म अब्दशो १०००युगैः १८ दि-
व्यैर्विधेर्द्युमानंस्यात्तद्वत्तद्रजनीभवेत् मध्याह्नतच्छेल

द्यां ऽस्ते: सूर्या ऽस्तंरवरवदिङ्गितै: १९ रात्र्य ऽर्द्धरवस्व पञ्चाशे राव्य न्तंरवरवरवान्तकै: दिव्यैर्युगैर्भवेदव्ययु- गंदिव्यंयुगंमतम् २० यद्देहाद्यो भवस्तस्मिं ल्लीनस्त- त्प्रलयेविधे: स्यात्सूर्य्यो नेत्रजश्चेन्दुर्मनजो मुखजः शि- खी २२ कर्णजो मारुतः प्रोक्तः कर्णजः प्राणउच्यते- नाभिजंत्व ऽन्तरिक्षस्या ब्राह्मणो मुखजो भवेत् २२ एववे- दोदितं सर्वं विज्ञेयं ब्रह्मदेहजम् स्वप्रभाते विधिस्त्वेता- न्नित्यमुत्पादयत्य ऽतः २३ भूगोलो ब्रह्मदेहान्तपर्य्य- न्तं सुस्थिरो दितः

## ब्रह्माण्डादिकज्ञानम्.

नारिकेलफलस्यैव काष्ठवद्गोलकाकृतिः २४ ब्रह्माण्डो महदाकाशे चोत्पन्नस्त्वीश्वरेच्छया वाकटाहद्वयस्यै- वसंपुटो गोलकाकृतिः २५ ईश्वरस्येच्छयोत्पन्नो ब्रह्मा ण्डस्त्व ण्डसदृशः ब्रह्माण्डस्योदरे भूमिर्भूमेर्बाह्यं स- मंततः २६ आकाशे खेचरा मेघपूर्वास्त्वैवाशुगा नगाः भूगोलाद्योजनैस्सूर्य्यै र्भूवायुरूर्ध्वगः स्मृतः २७ तदू ऽ र्ध्वे ज्वलनं तूर्द्ध्वं तस्योर्द्ध्वं चावहा ऽनिलः तयोर्मध्ये न्तरवे

प
गस्यान्ततोर्ध्वं प्रवहाऽनिलः २८ तत्पश्चादतिराख्याता
चं बु
राशिचक्रस्यदर्शनात् खेचराः स्युस्तदाधीनाश्चंद्र विच्छु
क्र सू मं बृ शं न ता
क्रभास्कराः २९ भौमेज्यार्कसुताश्चाऽथ भानिताराणि
४
तत्क्रमात् ततः समीरणाश्चाब्धिप्रमिता ऊर्द्ध्वतोर्द्ध्वतः ३०
उद्वहः संवहश्चैव सुवहश्चपरावहः लोकाः ७ भूर्लोकं
दृ उ
दक्षिणेव्यक्षात्तस्मात्सौम्यमध्यं भुवः ३१ स्वर्लोकं तु सु-
मेरुः स्यात्खे महश्चजनस्ततः ऊर्द्ध्वं तपस्ततः सत्यं ब्रह्मा
ण्डाऽभ्यन्तरे भवेत् ३२

## समुद्रद्वीपादिकम्

समुद्रभ्रमणं सूक्ष्ममतिदीर्घं प्रजायते तद्विधा पूर्वपश्चा
च्च याम्योदग्गमनं तथा ३३ यत्रेदानीं समुद्रोस्ति तत्स-
सिन्धुः प्रकीर्त्तितः यत्रेदानीं नार्णवोस्ति तद्विसिंधुः प्र
कीर्त्तितः ३४ अतीवचिरकालेन साऽर्णवस्थानतोऽर्णवः
व्यऽर्णवस्थानकं याति साऽर्णवोव्यऽर्णवोच्यते ३५ यस्मा-
त्पूर्वबुधैरुक्ता लंकादेवगृहादयः पत्तना विजलस्था
ने सिन्धौ मग्नास्तु संप्रति ३६ असम्भव जलस्थाने चूर्णो
त्थप्रस्तरादिभिः मन्यन्तेऽप्रतीतिं तु धीराः सिद्धान्त-

कारकाः ३७ त्रि[३]भागंपृथिवीमध्येसामुद्रांबु च बाह्यतः
भूमिः पा[४]दांशकं बाह्यात्प्रत्यक्षं दर्शिता जनैः ३८ समुद्रं
[१]केवलं भूमौ मृद्गुणाद्दर्शनादिभिः तन्मामानिततोलोकैः
कथिताऽन्यप्रमाणतः ३९ समन्ताज्जलधेर्मध्ये भूमि
स्तद्द्वीपमुच्यते द्वीपो न समकोणः स्यान्न च द्वीपाः स-
माः स्मृताः ४० नद्वीपाः कुण्डलाकाराः नद्वीपा दर्पणो
दराः द्वौः स्वल्पैरम्बु दैर्युक्ता विषमाः कुत्रकुत्रचित् ४१
दृश्यन्तेत्राऽ[मेघा]म्बुदास्तद्वद्द्वीपा भूमौ प्रकीर्त्तिताः लव-
णाख्या ऽर्णवात्सौम्ये मेरोः सांनिध्यदेशतः ४२ याम्येतद-
न्तरं द्वीपं जम्ब्वाख्यं विषमं मतम् नैर्ऋत्याग्नेयदिग्दैर्घ्ये भू
[१०१]सिंदिग्भागकोन्मितम् ४३ वायव्याग्नेयदिग्दैर्घ्ये [८८]वसु
नागांशकोन्मितम् पश्चान्नैर्ऋत्यदिग्दैर्घ्यं [१०९]गोभ्रचन्द्रांश
कोन्मितम् ४४ द्वीपं तद्द्वीपराजः स्यात्तस्मादऽस्यान्तयो
च्यते लंकातः पश्चिमेव्यक्षे[२५]तत्त्वषष्ठ्यं[६०]ऽशकान्तरे ४५
तद्वत्सा[२]वाद्यास्य[३]गंभ्यंशांतिर्यक् [३५]पंचाग्निभिर्लवैः त[२]द्दिग्घ्नं
वायुदिग्वातस्मिश्राख्यं द्वीपमुच्यते ४६ सिद्धानां पत्तना

१५० पलभागतः ७५ पलांश
त्सौम्येतिर्य्यक्कृतिर्व्यक्षभागतः पश्चात्प्राऽक्षांशपर्य्यन्तं
तद्द्वीपमऽमराभिधम् ४७ तदेवकुरुपूर्वाणांवर्षाणांस्था-
नमुच्यते तत्तिर्य्यग्भग्नकुटिलपत्राकारः समःस्स्मृतः ४८
तस्याग्रंयाम्यगंतस्यमूलंमेरुसमीपगः श्र्यासेरण्डदलाका-
रंजम्ब्वाख्यंद्वीपमुच्यते ४९ तन्मूलंमेरुसान्निध्यमऽग्रं-
भारत किन्नर हरि
तद्व्यऽक्षसन्मुखम् तदेवभारतादीनांस्ववर्षाणांस्थानमु
च्यते ५० सिद्धानांपत्तनात्पूर्वं पश्चाद्रोमकपत्तनात् व्य-
क्षेव्यक्षात्तद्रसांशंसौम्यगंदक्षिणोखिलम् ५१ वायव्यां
ग्नेयविस्तारं सौम्याऽपाग्दैर्घ्यमीरितम् अमरद्वीपवत्त-
त्तूःस्याद्दैर्घ्येविस्तृतावपि ५२ तस्याऽग्रंयाम्यगंतस्यमू
लंव्यक्षगतंमतम् अमरद्वीपवद्द्वीपंदक्षिणाऽमरमुच्यते
५३ प्राक्षष्ट्यंशेषुलंकातो यद्व्यक्षंतस्यदक्षिणे तिर्य्य
३५ फलांशानां
क्षाग्व्यक्षभागानांमध्येद्वीपंनवंमतम् ५४ प्राक्पश्चात्त-
स्यदैर्घ्यन्तुत्रिंशद्भागमितंमतम् याम्योत्तरन्तुविस्तारंस्वां
श्यंशप्रमितंमतम् ५५ तद्भग्नपात्रिकापत्रवत्तन्मूलंतु-
याम्यगम् विज्ञेये कार्मुकाकारे द्वीपानांदैर्घ्यविस्तृती ५६

अत्रान्ये लघवोद्वीपा नोदिता विस्तृतेर्भयात्

## हिमालय भारतादि खण्डत्रयज्ञानम्

लंकातश्चोत्तरे त्रिंशदंऽक्षांशप्रमिते गिरिः ५७ यत्त हि
मालयाख्योद्रिस्तच्छैलेन्द्रश्चकीर्त्तितः प्राक्पश्चाद्दी-
र्घतातस्य प्रत्यक्षं परिदृश्यते ५८ लंकाशैलेन्द्रयोर्मध्ये
वर्षभारत मुच्यते तद्वत्तस्योत्तरे देशो प्राचीनखण्डमु
च्यते ५९ तदेवकिन्नरोवर्षः पूर्वचार्य्यैः समीरितः त-
त्सौम्ये हरिवर्षस्तु महत्प्राचीन मुच्यते ६०

## वर्णव्यवस्थितिः

लवणाख्याऽर्णवात्सौम्ये वंगालात्पश्चिमेनतया शैलेन्द्रा
द्दक्षिणे पूर्वे ह्यऽटकाख्यनदात्तथा ६१ वर्णा विप्रादयो
वेदा ऋक्पूर्वाःस्थितयोमताः बाह्येसर्व देशेषु चाऽन्त्य
जा निवसन्तिहि ६२ याम्येदृढलवं सिन्धोस्स्वल्पांशमु
त्तरेगतम् यत्राऽतिदैर्घ्यविस्तारवेधाः स्युस्सागरस्यच
६३ तन्महासागरस्तत्रतेऽल्पाश्चेदऽल्पसागरः स्यादेक
सिन्धुनाभूमिस्समन्ताच्चैववेष्टितः ६४ यत्रोच्चासिं-

पू॰द॰प॰उ॰
धुत्तः पृथ्वीद्वीपंतत्रैवजायते सिंधोश्चतुर्द्दिशोज्ञेयाः सा-
गराः युगसंम्मिताः ६५ लंकाद्याःपत्तना देवनिर्मिताः
मुनिभिर्मताः षट्संख्यकाः समुद्रस्य तोयेना ऽन्तरिता
क्षितौ ६६ अल्पादऽल्पतराश्चैवन्चाऽधिकादऽधिकास्त-
था ब्रह्माण्डांकृतयोगोलाः सिन्धावन्तरिताः पृथक् ६७
पृथक्चाऽतिगभीरस्थाःकेचिदुच्चजलस्थिताः केचिन्नि-
असंख्यातका
थोदग्रवाभ्यांहीना दूरंगता यथा ६८ संख्याहीनास्तु
आकाशे
ब्रह्माण्डाः खसंख्यारहितेस्थिताः तद्वन्मेघेचांऽबुक-
णा वालुकानितृणाःक्षितौ ६९ संख्यचारहिता एवंब्र-
ह्माण्डाईश्वरस्यहि तेषाम्मध्येत्विदं ह्येकंब्रह्माण्डंप-
रिवर्त्तते ७० षट्शास्त्राण्येकंबुद्धिश्चज्ञेयाः सप्तार्णवा
बुधैः

## भूव्यासपरिधिज्ञानम्

भूगोलपरिधेःखाभ्रषड्रामा ३६०० योजनाःस्मृताः
७१ अक्षांशैर्मापितोभूमेर्बिम्बः स्याद्योजनैः स्फुटः

## भूपृष्ठग्रहयोरन्तरंलोकार्द्धव्यासम्

खेटकक्षाण्डलोकानांव्यासाद्भूव्यासवर्जितात् ७२

यत्खण्डं पृथिवीपृष्ठखेटकक्षांतरं भवेत् काश्यपीस्फु-
टबिम्बघ्ना दिग्युग्मोरगयोजनाः ७३ सत्यवेगघटीभ-
क्ता लोकव्यासाऽर्द्धमादिशेत् **भूपरिध्यानयनम्**
सत्यभुक्तिकलाऽभ्यस्ता लोकाऽर्द्धव्यासयोजनाः ७४
खेन्दुयुग्मगजैराप्ताः स्युर्भूपरिधियोजनाः **दिग्ज्ञानम्**
स्वव्यक्षात्प्राग्दिशंव्यक्षे यत्तत्पूर्वदिशं भवेत् ७५ इत्थं
तत्पश्चिमं पश्चान्मध्ये याम्योत्तरं भवेत् सर्वेषामुत्तरं मे
रुर्याम्यः स्याद्वडवानलः ७६ सिद्धानांनगरंलंकाऽधः
स्थानं विबुधोदितम् भूवृत्तपादेलंकायां यमकोटि
स्तु प्राङ्गता ७७ भूवृत्तपादेलंकायाः पश्चाद्रोमपुरी
स्मृता भूवृत्तपादेलंकायाः सौम्ये देवपुरी स्मृता ७८
भूवृत्तपादेलंकायां याम्ये दैत्यपुरी स्मृता दैत्यालयेऽन्त-
कस्थानं तस्माद्याम्यं तदुच्यते ७९ याम्यं देवालयात्सर्वं
सौम्यं दैत्यालयात्तथा इन्द्रादिस्थानबोधार्थं मेरोः प्रो-
क्तं चतुर्दिशम् ८० यतोऽयनांशाकैस्सूर्यस्संस्कृतो
मेषभंगतः यमकोटिस्थलं मेरुदेशस्थैः परिदृश्यते ८१

अथराशौ

अस्तस्तन्मेरुवासीनां यमकोटिस्तु प्राङ्कृता मार्गारो

रसंस्कृताऽर्कस्य तुलासंक्रमवासरैः ८२ रोमकेऽस्तम-

७ सं-रोमके सूर्योदयं १सं-यमकोटिपत्तनेसूर्यास्त

यं याति पश्चिमं रोमकं ततः दैत्यानां तद्विलोमं तु ह्युदयास्त

स्थलं भवेत् ८३ स्वस्वप्राक्सन्मुखो भूत्वा दक्षिणं दक्षिणे

करे वामं वामकरे स्थानज्ञानार्थं समुदीरितम् ८४ भूवृत्तां

घ्र्यन्तराङ्कैर्मौ ज्ञेयाः षड्वेव पत्तनाः दिगुत्पत्तिः

तुल्याह्लेऽर्कोदयस्थाने भूत्वाऽभिवदनं नरैः ८५ सन्मु-

खं प्राग्दिशं ज्ञेयं पृष्ठं पश्चाद्दिशं मतम् वामपाणिदिशं सौ

म्यं याम्यं दक्षिणहस्तगम् ८६ एवं दक्षिणहस्तं च ह्युत्ता-

नं पूर्वदिग्गतम् तत्र मध्यांगुलिः प्राक्स्याद्याम्यमंगुष्ठ

दिग्भवेत् ८७ पश्चिमं करमूलः स्यात्सौम्यं स्वल्पांगुलि

र्भवेत् कनिष्ठांगुलिदिग्देवा विश्वेदेवादयः स्मृताः ८८

भानोः पूर्णाः पमांशोनखांकाऽक्षांशान्तरेऽल्पऽयम् स्वव्य

क्षस्थानतः सौम्ययाम्ये दिग्ज्ञानमीरितम् ८९ यमको-

टिस्थलादेवं सौम्ये मेरुरुदीरितम् दक्षिणे तु कुमेरुश्च

पूर्वस्यां सिद्धपत्तनम् ९० पश्चिमस्यां तु लंका विज्ञेया

गणकोत्तमैः यमकोटिस्थलाऽधःस्थं रोमकं समुदीरितम् ९१ एवं सिद्धपुरात्सौम्ययाम्ये मेरुकुमेरुको विज्ञेयौ रोमकं पूर्वे यमकोटिस्तु पश्चिमे ९२ ज्ञेये सिद्धपुराऽधःस्था लंका ज्ञेया विचक्षणैः सुमेरोर्दक्षिणस्थाने यमकोटिरुदीरिता ९३ लंकारोमकपूर्वाणां कुमेरुर्दक्षिणे मतम् सुमेरुश्चोत्तरे प्रोक्तमेवं सर्वावनीस्थलात् ९४

## अथ भूपिण्डानयनम्

तिर्यग्याम्योत्तरं तद्वदूर्ध्वं पूर्वापरं भवेत् पुरयोरन्तरेतिर्य्यग्भूमिश्चक्रलवाहताः ९५ तयोर्नगरयोरक्षभागविश्लेषभाजिता लब्धं भूपरिधेर्मानं स्यादेतत्त्वनुपातजम् ९६. कक्षाक्रमम् भूस्वपिण्डेन्दुविच्छुक्रार्ककुजज्यार्किभानि च. हिस्वशक्त्योपर्य्युपरि स्वेत्वाधारं विनास्थिताः ९७ भूगोलनिश्चयम्

भूपृष्ठः सर्वतो ग्रामाऽद्यंऽबुचित्यादिभिर्युतः किञ्जल्कप्रकरैरस्ति प्रणामी पुष्पगोलवत् ९८ अपक्कीकुसुमाकारं प्रणामी कुस्कमं तथा कदम्बकुसुमाकारं बबूल

पुष्प　पश्चार्द्धे वा १८० भागेषु
कुसुमम्मतम् ९९ स्वस्थानात्सर्वतो वृत्तखण्डेस्वाऽधः
सुमेरु
स्थलं भवेत् ज्ञेयं मेरुद्वयोर्मध्ये स्वान्यस्वाऽधःस्थलंमिथः
सुमेरोः
१०० देवालयस्यपातालंयमसद्मबलिगृहं जायतेतत्कु
मेरुश्चपरमेरुश्चतद्भवेत् १०१ भूपृष्ठेयत्रयेसंस्थाश्चा
९०
त्मानमुपरिस्थितम् मन्यन्तेनिजदेशात्तु भूपादेतेपरस्प
रम् १०२ तिर्य्यग्वत्संस्थितानऽन्यान्पातालस्वांऽघ्रि
स्वस्थानम्
सन्मुखम् निजपाताल भूपृष्ठंयद्वत्तद्वन्निजस्थलम् १०३
तस्माद्विज्ञेयमाखस्थे गोलेकोर्द्ध्वस्तुकोप्यऽधः कुस्वां
गत्वाज्जना एव स्वस्थानात्सर्वतस्सदा १०४ अवपश्य
न्ति भूगोलंचक्राकारसमंखलु शीतोष्णस्थानज्ञानं
स्वस्थानरूपाः　सू
तत्स्थानाकृतयायत्रत्वऽशवः प्रपतंतिहि १०५ भानो
स्तच्छीतलंदेशंतद्वश्वस्तेचोष्णमीरितम् ऋतुज्ञानम्
विपर्य्ययाऽदहोरात्रमऽन्योन्यं देवदैत्ययोः १०६ स्याच्चे
अयनांशैः　सू　उ
न्मार्गलवैर्भानुः संस्कृतः सौम्यगोलगः स्युस्तर्ह्यऽर्क
सू
करास्तीव्रा ग्रीष्मेदेवलवक्षितौ १०७ देवानांदर्शनंया
दैत्यानां　रात्रि
तितस्माद्देवदिनंभवेत् तद्दिनंदेववैरिणां यामिनीकि

सू द दिनम्
लजायते १०८ सूर्यश्चेद्याम्यगोलस्थः स्याद्युमानसु
दैत्यानाम् सू उ.
रद्विषाम् तन्मध्येऽर्ककराः शीता हेमन्ते सौम्यभूदले
दिनं रात्रि * दे वांशे
१०९ तद्वत्स्वरजनीमानं देवानां जायते किल भूमौ सौ-
उ. दैत्यांशे ४ शरद्वसंतः
म्यार्द्धे याम्यार्द्धे स्यान्मिथश्चतुर्थीऋतुः ११० शरद्वसन्त
वसंत शरत
योर्व्यस्तं ग्रीष्महेमन्तयोस्तथा वर्षाशिशिरयोर्ज्ञेयं या
द.
म्याख्ये भूदले बुधैः १११ व्यस्ताद्दक्षिणगोलज्ञानम्
उ द
सौम्यार्द्धे क्षितिवत्सर्वं ज्ञेयं याम्यदलक्षितौ स्युश्चाऽ
पलभा पलांशाः लंबांशाः उः उ. द मेषादितुलादिज ध
क्षभाक्षलंबांशाः सौम्या गोलं यथोचितम् ११२ स्या-
* १ ७ १ * ७ ध उ
त्स्वर्णं मेषजूकादिगोलजं व्यस्तकं भवेत् सौम्यभूम्य-
द
र्द्धवद्याम्यभूम्यर्द्धेपि गतिर्भवेत् ११३ । ४१७

**श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविर**
**चिते परमसिद्धान्ते गोलाधिकारो द्वि-**
**तीयः २**

---

* देवानां रात्र्यर्द्धे दैत्यानां दिनार्द्धे देवानां दिनार्द्धे दैत्यानां रात्रिदलम् देवानां सूर्योदये दैत्यानां सूर्यास्तं देवानां सूर्यास्ते दैत्यानां सूर्योदयं भवति.

## अथपितृदिनोत्पत्तिः

चन्द्रोर्द्धांशोतु पृष्ठांशोपितॄणांस्थानमुच्यते तिथिमासे-
नपितॄणांद्युनिशांस्याद्यतस्ततः १ दर्शान्तेद्युदलं कृष्ण
पक्षाऽर्द्धे भास्करोदयम् सूर्य्योऽस्तंशुक्लपक्षार्द्धे शु-
क्लान्तेस्यान्निशादलम् २ मेरुमध्याह्नादिज्ञानम्
एवंमेरुनिवासीनांदेवानामयनांशकैः संस्कृतेकर्कगे
त्वार्द्धं मध्यगेर्केदिनोदयम् ३ सूर्य्योऽस्तंनक्रगेतस्या
न्मृगगेतामसीदलम् एवंदैत्यालयस्थानांव्यस्तंस्याद्यु
दलादिकम् ४ ऋतुराशिज्ञानम्.

संस्कृतोऽर्कोऽयनांशैर्यत्संस्कृतोऽर्कस्तुतद्भवेत् संस्कृ
तान्मृगगादर्कात्षराशासाउत्तरायणम् ५ स्यात्तदर्क-
र्कगादर्कात्षराशासा दक्षिणायनम् संस्कृताच्चापगा
दर्काद्धेमन्तं भद्वये भवेत् ६ संस्कृतात्कुम्भगादर्का
च्छिशिरं भद्वये भवेत् स्याद्वसन्तोऽजगादर्कात्संस्कृ
ताद्द्वयेऋतुः ७ एवंग्रीष्मादयोराशाः ऋतवः क्रम
शोदिताः वर्षमानोत्पत्तिः.

निर्वैधाऽभ्युदयस्थाने शुद्धे तुल्यक्षितौ बुधैः ८ वृत्तं
कृत्वाऽङ्कितं चक्रभगैः सर्वदिशान्वितम् घस्रेऽर्क्रा
न्तिजे भानो भास्कराऽर्द्धोदयक्षणे ९ दृश्यते यत्र तद्वृ
त्ते भानुस्तत्राऽङ्कमाचरेत् तद्द्वितीयदिने भानो रर्द्धबि-
म्बोदयक्षणे १० तत्पूर्वाऽपरगां रेखामुल्लंघ्यैव रबि-
स्तथा तद्वृत्ते दृश्यते यत्र तत्राऽप्यंऽकं समालिखेत् ११
पूर्वाद्यंऽकांशभेदघ्नाः सावनाः षष्टिलिप्तिकाः द्वितीयाद्यंऽकयोर्मध्य भागैर्भक्ताः कलादिकम् १२

प्रथमचिह्न द्वितीयचिह्नयोः

पंचांग वह्निभिर्वस्त्रैर्युक्तं लिप्तास्थलेफलम् कृत्वा घस्त्रादि
दिनादि
३६५।१५।३१।३१।२४
कं सौरवर्षमानं तदुच्यते १३ यथा कश्चित्तु सूर्योऽभ्रं
क्रान्तिजे भास्करोदये मध्यपूर्वस्थले भानुश्चोदयं या-
ति तद्दिनात् १४ नित्यं प्रत्युदयाद्दृष्टात्तत्प्राग्देशोदया
दिकान् भानोः प्राग्देशतः पृष्ठभागेन वत्सरान्तके १५
वर्षान्ते
जायतेऽर्कोदयं चाऽन्यवर्षारम्भे त्विनोदयम् स्याद्यत्राऽ
पूर्ववर्षान्तापरवर्षारंभार्कोदयस्थानयोः
र्कस्य तत्तत्र चोदयस्थानयोर्द्वयोः १६ मध्यभागोद्भृता
भानोः सावनाः स्वांगनाडिकाः वर्षान्ताऽर्कोदयस्थान

पूर्वभेदांशाकाहृताः १७ लब्धं कलादिकं युक्त्वा दर्शिताऽ

सू. ३६५ — ३६५।१५।३१।३१।२४

र्कोदयैक्यके तल्लिप्तादिस्थले तस्याद्वर्षमानं दिनादिकम्

सू.

१८ निर्वेधाऽस्तमयस्थाने वाऽर्काभ्रक्रान्तिजे दिने इत्थं

सू.

वृत्तेरवेरऽर्द्धबिम्बाऽस्तं परिदृश्यते १९ यत्रांऽकमाच

सू.

रेत्तत्र भानोस्तदऽपरेऽह्नि दृश्यते ह्यऽर्द्धबिम्बाऽस्तं यत्र

प. — सू.

तत्रांऽकमाचरेत् २० पश्चिमार्धांऽकयोर्मध्यभागाश्वि-

चिह्न द्वितियार्न्तद्वयो: — दिनादि — ३६५

ह्नान्तराहृताः लब्धं घस्रमुखं पंचषड्रामैर्दिवसैर्युतम्

३६५।१५।३१।३१।२४

२१ कृत्वा घस्रमुखं सौरवर्षं तत्परिकीर्त्तितम् कस्मिं-

श्चित्संक्रसस्याऽह्नात्पुनस्तत्संक्रमं भवेत् २२ गण

३६५

नाद्यैर्दिनैस्तेऽह्नाः स्युः पंचांगगुणोन्मिताः यैरऽह्नैर्वा

सू. — १२

ऽर्कमध्यस्यचक्रंपूर्णं प्रजायते २३ तेऽह्ना भूपृष्ठसं-

स्थानां वर्षमानस्य कीर्त्तिताः तेऽह्नाद्याः सावना ज्ञेयाः

दि ३६५ घ १५ पू ३१ विप ३१ प्रप ३१ संप २४ — ३६५।१५।३१।३१।२४

पंचांगशिखयोदिनाः २४ क्रमयः क्रमयः सिद्धाउदया

सू.

दुदयं रवेः एकंसावनघस्रं स्यादेवं वर्षमिति भवेत् २५

४३२००००

वर्षैः शून्यरवस्वाश्वाब्धिगुणवेदैर्युगो भवेत् अंकसंज्ञा

३ — ४ — ५ — ६

टोरामश्चोयुगः प्रोक्तो पोशश्छोर्ससत्तया २६ सोनं

गोलोऽगजोकं भूगोलिर्वोद्धिः करोच्यते

## पलादिभाद्यन्तमानम्

पलानां षष्टिभिर्लिप्तेतत्त्वा गैरंशकोऽंशैः २७ तत्त्वां
त्रिभिश्चराशिः स्यात्तत्सूर्यैश्चक्रमुच्यते गतिज्ञान
खेटानां प्राग्गतिर्ज्ञेया राश्यऽब्दैः प्रलङ्घजवम् २८
पश्चिमाऽभिमुखी भुक्तिर्भानां चक्रस्यतु स्मृता रा-
शिचक्रस्थिताः खेटा दृश्यन्ते पश्चिमंगताः २९ यस्मा
न्मेषोदयात्पश्चात्पूर्वस्यां वृषभोदयम् तन्मेषर्क्षतः पू
र्वे वृषभः स्याद्यथा रविः ३० त्यक्त्वा मेषं वृषं याति तत्क
थं पश्चिमंगतः स्याद्द्वितीयतिथौ पश्चात्संध्यायां दृश्यते शा-
शी ३१ त्रितिथौ प्राग्दिशां तस्मात्संध्यायां दृश्यते विधुः
प्रत्यक्षमेवं प्राग्वेगं स्यात्पश्चाद्दक्षिणो जवम् ३२ तू-
र्णगश्चाऽल्पकालेन कालेन महताऽल्पगः खेचरस्त्वऽ
र्कभान्भुक्त्वा पुनस्तत्रैव गच्छति ३३ भूगोलाद्दूरगः
खेटश्चेत्तन्मन्दगतिर्भवेत् शीघ्रवेगेतु भूगोलनिक
टे खेचरो भवेत् ३४ राशिसंवत्सरं चक्रं राश्यऽब्दं

भगणमतम् . युगेराशिचक्राणिराशिवर्षाणि-
बु शु सू ४३२००००
भगणानि . सू॰ युगेविन्दुशुक्रसूर्याणांखखखाभ्ररदा
मं॰ बृ॰ शं
र्णवाः ३५ राश्यऽब्दास्तेकुजेज्यार्किशीघ्रोच्चानां भव-
राशिवर्षाः ५७७५३३३६
त्सराः चं॰ षड्देवाऽग्न्यऽक्षसोऽद्र्यक्षा राश्यब्दाः
चं चं॰ मंदो
स्युर्निशापतेः ३६ चन्द्रोच्चस्य चन्द्रमन्दोच्चचक्रा
४८८२०३ व्यस्ता चं॰ पात
णि त्र्यभ्राभ्र्यष्टाष्टसागराः राहोः वामा ग्लौःपातच-
२३२२३८
क्राणिवस्वऽग्न्यऽश्विरदान्तकाः ३७ भौमस्य द-
मं॰ २२९६८३२
न्ताष्टांगांके श्रुतयोयुगे भौमभवत्सराः बुधस्य
बु॰ १७९३७०६०
ज्ञस्यशीघ्रोच्चचक्राणि षष्ट्यभ्राश्वाद्रिगोधनाः ३८
बृ ३६४२२०
बृहस्पतेः राश्यऽब्दा गीष्पतेःखाश्विद्व्यब्धिषड्वह्नि-
शु ७०२२३१६
योयुगे शुक्रस्य शुक्रशीघ्रोच्चचक्राणिषट्सोऽग्नि-
श॰ १४६५६८
श्रुतिखाऽद्रयः ३९ शनेः वस्वंगाक्षांगमनवोयुगे
सू॰ सूर्योदयानि सूर्यदिनाः
सौरभवत्सराः युगेसावनभूदिनाः सूर्यस्योदयभे
१५७७९१७८२८ १५७७९१७८२८
दानि भूदिनाः सावनाः स्मृताः ४० पिण्डाष्टाश्वेन्दुगो
भ॰
शैलशैलपंचेन्दवोयुगे नक्षत्राणांदिनाः धिष्ण्य
नक्षत्रोदयानि नक्षत्रदिनाः १५८२२३७८२८
चक्राणिपिण्डाष्टांगाग्निदृग्द्व्यष्टवासराः ४१

चान्द्रदिना: चंद्रोदयाः
चान्द्रदिनास्तिथयः चान्द्राह्नाः खाष्टखाभ्रा-
१६०३०००८०
भ्रखाग्निव्योमनृपायुगे अधिमासाः तर्कदेवाग्नि
१५९३३३६
गोघोस्राः स्युर्युगेह्यधिमासकाः ४२ अवमास्तिथयः
२५०८२२५२
अवमाह्नानिनेत्राक्षश्रुत्यष्टाभ्राक्षपाणयः सूर्यमासाः
५१८४००००
खाभ्राभ्राभ्राब्धिनागेन्दुबाणाः स्युः सूर्य्यमासकाः ४३
सू भगणाः सू ४३२००००
सूर्यस्यराशिवर्षाणि भानोः स्युर्वत्सरा युगे भूदि-
१५८२२३७८ २८ सू ४३२००००
नोत्पत्तिपूर्वकम् नक्षत्रदिवसाः सूर्यचक्रोना भूदि-
भूदिः १५७७९१७८२८ सू ४३२०००० चं ५७७५३३३६ चा.मा.
नाः स्मृताः ४४ सूर्येन्दुचक्रविश्लेषचान्द्रमासाः प्र-
५३४३३३३६ ५३४३३३६
कीर्त्तिताः चान्द्रमासाः षड्वेवामरचोभ्यक्षाः स्यु
५३४३३३३६ ४३२००००
र्युगेचान्द्रमासकाः ४५ चान्द्रमासान्विताः सूर्यभाब्दाः
चं भगणा ५७७५३३३६ १५७७९१७८२८ सू ४३२०००० चं
स्युर्ग्लौर्भवत्सराः सावनाह्नान्विताः सूर्यराश्यब्दा भो-
१५८२२३७८२८ ५१८४०००० चां.मा. ५३४३३३३६
दयाः स्मृताः ४६ रविमासोनिताश्चान्द्रमासाः स्युरधि
अधिमा. १५९३३३६ १५७७९१७८२८ चा. १६०३०००८०
मासकाः भूदिनाश्चान्द्रद्युभ्योनाः स्युश्चोनदिवसास्ति
२५०८२२५२
थेः ४७ युगेप्रोक्तानुसारेणसर्वत्रैवं भवन्तिते युगोक्ताः
१००० भगणादिकाः
खखखाभ्रघ्नाः स्युः कल्पे भाब्दपूर्वकाः ४८ सर्वत्रस्व-
न दिनगणं
स्वचक्रोना भाह्नाः स्वस्वोदयाः स्मृताः क्रियते द्युव्रजं

१५७७९१७८२८
येषांते ज्ञेयाइष्टवत्सराः ४९ स्वस्वोक्ता भूदिनैराप्ता रा-
भगणा १ दिनमध्यगतिः नवं
श्यब्दा द्युगतिर्भवेत् तद्देगंवर्षमानघ्नं स्वस्ववर्षगतिर्भ-
४३२०००० १५७७९१७८२८
वेत् ५० वर्षमानंभवेत्सूर्य्यचक्राप्ता युगभूदिनाः

१२
## सर्वाहर्गणानयनम्.      इष्टाब्दा रविभिर्निघ्ना

चैत्राद्यैः
मासैश्चैत्रमुखैर्युताः ५१ तेपृथक्कुचाऽधिमासानांसे
१५९३३३६ युगोक्ता ५१८४००००
माढ्यास्त्वऽधिमासकैः अभ्यस्ताः सूर्यमासाप्ता लब्धा
३० तिथियुता
ऽधिमासकान्विताः ५२ खत्रिघ्ना गतघस्राढ्या ह्रिस्था
२५०८२२५२ १६०३००००८०
ऊनदिनाहताः शशांकदिवसैराप्ताः लब्धोनदिवसोनि-
ताः ५३ सावनोऽहर्गणस्तत्स्यात्तद्भ्यारम्भवासरात्
व्यस्तम् घस्रौघादनुपातेन प्रोक्तव्यस्तेनधीमता ५४
यातांस्तिथीन् गतान्मासान् यातेष्टाब्दान्समानयेत् वै-
शाखाऽसितपक्षान्तेस्यादेकोदर्शमासकः ५५

## अथदिनगणानयनम्.

१७७८ १२
शाकोष्टाद्रिघनैरूनोर्कघ्नश्चैत्रादिमासकैः दर्शाख्यैः सं-

---

* एकवर्षे राशिचक्राद्याः सू. १।०।०।०।०।० चं. १३।४।१२।४६।४।४८ चं.उ. ०।१।१०।४१।०।५४ राहोः ०।०।१९।२१।११।२४ मं. ०।६।११। २४।९।३६ बु. ४।१।२४।४५।१८ बृ. १।०।२१।६।० शु. १।७।१५।११।५२ ।४८ । श. ०।०।१२।१२।५०।२४

गणः गणः
पुनः स्थूलश्चाऽर्कमासौघ उच्यते ५६ तद्वृन्दस्त्वऽधः
१५९३३३६ ४३८४००००
अर्कौघश्चाहतोक्ताऽधिमासकैः तत्प्रोक्तरविमासात
गणः
स्तत्फलाऽधिकमासकैः ५७ संयुक्तोमासवृन्दस्तच्चा
गणः ३० तिथि
न्द्रमासौघउच्यते तत्त्वाऽग्निघ्नोद्धृताह्नाघात्तच्चान्द्राऽ
५५
हर्गणं भवेत् ५८ पञ्चपञ्चयुतंचान्द्राऽहर्गणंपरिमर्द्धि-
२५०८२२५२ १६०३००००८०
तम् उक्तोनदिवसैरुक्तचान्द्रघस्त्रोद्धृतफलम् ५९ हि-
गणे गणः रविवासरात्
त्वाचान्द्रदिनौघेतुस्यादऽह्नोघोर्कवासरात्
१६०३००००८० दिनगणः
अहर्गणाच्छाकानयनम् उक्तचान्द्राह्नघस्त्रौघ
१५७७९१७८२८ गणः
घातकह्नोद्धृतफलम् ६० स्थूलचान्द्रदिनौघस्याद्धता
१५९३३३६ गणः
प्रोक्ताऽधिमासकैः स्थूलचान्द्रदिनौघंतद्युक्तचान्द्र-
१६०३००००८० लब्धि हीन
दिनाह्वयैः ६१ भक्त्वास्य चाग्निघातोनस्थूलचान्द्रघु
गणं + गणं
वृन्दकम् तत्स्थूलमादिसंज्ञाह्व वृन्दमुक्तं विचक्षणैः
तत्त्वस्वक्षेपसंज्ञोनात्स्वस्वाऽयत्यागतस्तथा स्थूलौ
गणः गणः
स्तश्चान्द्रघस्त्रौघसूर्यघस्त्रौघकौचतौ ६३ तज्ज्ञाताऽ
सू चं सू द्यः
हर्गणात्था भ्यांसूर्येन्दुभ्यांतिथिंस्फुटाम् आनयेदऽर्क
भासन्नाः स्युर्मासाश्चैत्रपूर्वकाः ६४ तच्चान्द्राऽहर्ग

एवं खाग्निभक्तशेषं तिथिर्भवेत् आदिघस्रव्रजं खाग्नि-
भक्तं लब्धमिनोद्धृतम् ६५ शेषं चैत्रादिमासाः स्युराप्तं
स्युर्यातवत्सराः अत्र याताब्दनागाश्वमेघैक्यं स्याद्दि
नौघजम् ६६ शाकं स्याद्वाऽस्फुटं याताऽब्दाद्यंक
ह्रानुपातजम् योग्यं योगोचितं यत्तत्सर्वत्र क्षेपकं मतम्
६७ मानानयनम् उक्ताधिमासकैर्भक्ताश्चान्द्र
घस्रास्त्वऽहर्मुखम् एकाऽधिमासमानस्य स्याच्चा
न्द्रदिवसास्तथा ६८ उक्ताऽवमदिनैर्भक्ताएकावमतिथेर्मितिः एका
वमप्रमाणाह्नैरेकाऽधिमाससमानजाः ६९ घस्राः स्युश्चोद्धृताएका
ऽधिकमासान्तरेऽवमाः मध्यगत्यऽन्तरांशाप्ताश्चक्रांशाश्चंद्रसूर्ययोः
७० घस्रौघसमकालात्स्यात्तुल्यकालकरं तयोः तच्चैव खाग्नितः शोध्य
हारः स्यादूनमानदः ७१ हारांशाः खगुणास्तत्र स्यादूनाहःप्रमाण-
कः यत्राऽवमाऽह्नसान्निध्ये ऽह्नौघकध्यूनकं भवेत् ७२ तत्र रूपो-
नसंयुक्तं कार्यं तद्द्युगणं बुधैः ग्रहाऽर्कयोर्मध्यजवविव -

* उक्तक्षयदिनैर्निघ्नं घस्रौघं कुदिनोद्धृतं ६७ लब्धावमदिनैर्युक्तं कृत्वा घस्रगणं बुधैः स्या-
च्चान्द्राह्नगणं चाथाऽह्नर्गणोक्ताधिमासयोः ६८ घातकह्नोद्धृतलब्धं खत्रिघ्नं संविधाय च हीनं
तच्चान्द्रघस्रौघे तच्छेषं खगुणोद्धृतं ६९ शेषं यातं तिथिर्ज्ञेयाल्लब्धमर्कोद्धृतं फलं स्युर्यात
वत्सराः शेषमासाः स्युश्चैत्रपूर्वकाः ७० तत्र क्षेपं धनं कृत्वा स्वेष्टशाकादिकं भवेत्

रांशविभाजिताः ७३ चक्रांशा दिवसादिः स्यात्सूर्य
खेचरयोर्युतिः प्रायशः खत्रिघस्रोर्द्ध्वं सौरमासेषु जायते
७४ अधिमासंतु यद्वर्षे ह्यधिमासद्वयं भवेत् तद्वर्षे क्ष-
यमासंतु निश्चयेनैव जायते ७५ चान्द्रात्स्थूल तृतीये
ऽब्दे त्वऽधिमासः प्रजायते भानोस्संक्रमयोर्मध्येय
दि दर्शद्वयं भवेत् ७६ तद्दर्शद्वयमध्यंतु ह्यधिमासो
च्यते सदा यद्वर्षे दर्शयोर्मध्ये सूर्यसंक्रमणद्वयम् ७७
यस्मिन्भवति मासे तु न्यूनमासस्तदुच्यते.

## सौरमासेभ्योऽहर्गणानयनम्

शाकश्चाष्टाऽगजीमूतै रूनस्तेनैव ताडितम् ७८ घस्रा
द्यं सौरवर्षस्य मेषाऽर्काङ्कत वासरैः युक्तं तर्काऽन्वितं
कृत्वा घस्रौघोर्कमुखो भवेत् ७९ मेषाऽर्कसंक्रमादू-
र्ध्वं वर्षारम्भं यदा भवेत् चैत्रशुक्लाद्यमेषाऽर्कसंक्रान्त्यो-
रन्तरं त्यजेत् ८० मेषाऽर्कसंक्रमात्पूर्वमऽब्दारम्भे ष्ट-
वासरौ चेत्स्यातामिष्टमेषाऽर्क घस्रयोर्विवरं त्यजेत्
८१ शेषमिष्टदिने घस्रवृन्दं ज्ञेयं विचक्षणैः तत्रैकं

मानभिन्नंचेत्स्यात्तच्छान्तिमाचरेत् ८२ चैत्रशुक्ला-
द्यदिवसेवर्षारम्भं प्रजायते पूर्वोक्ताऽहर्गणेचाऽधिमा-
सासन्नेतुसंशयम् ८३ दर्शमासेषुवैयस्मात्तस्मादेत
त्पुनर्मतम् **अथशाकोत्पत्तिः**
चैत्रशुक्लाद्ये दिवसे शाकसम्वत्सरन्मुखाः ८४ येस्यु
स्तेतुगता ज्ञेयाः शाकाद्याः पण्डितोत्तमैः यथा शून्यमि-
तेशाके चैत्रशुक्लाद्यवासरे ८५ कस्यचिज्जननंचेत्स्या-
च्छाकेत्वेकमितेतथा चैत्रशुक्लाद्यघस्रेतुतस्यतज्जन्म
वासरात् ८६ यातंशाकान्तरंचैकं याताऽब्दंचैकमीरितं

## अथदिनगण भवखेटानयनम्

स्वस्वप्रोक्तभवर्षघ्नोऽहर्गणः कुदिनोद्धृतः ८७ घस्रौ-
घाज्जनितः खेटस्तच्चक्रवदनो भवेत्.

## दिनगणभवखेटादहर्गणानयनम्.

द्युगणोद्भवखेटस्य हत्वायुगकुवासरैः ८८ विपलान व
शेषंतुविपलानांचयोजयेत् तत्षष्ट्याविभजेल्लब्धंप-
लानामऽवशेषकम् ८९ जायते तत्पलैर्हत्वा युगभूवास-

रांस्तया पलानामऽवशेषन्तु योजयेत्खरसैस्तथा ९०
विभजेच्च घटीशेषं जायते युगभूदिनैः हत्वा तत्र कला-
धीरैर्नाडीशेषन्तु योजयेत् ९१ विभजेत्खरसैस्त
स्यादंशशेषं तु तद्भवैः युगभूवासरान् हत्वा भागशेषं
तु योजयेत् ९२ त्रिंशता विभजेद्राशिशेषं तज्जायते
तथा युगकल्पभयो घाति युक्तात्तद्राशिशेषकम् ९३
द्वादशैर्विभजेद्वाब्दशेषं तज्जायते तथा युगभूवासरैः
हत्वा यातराश्यब्दसंज्ञकान् ९४ योजयेद्वाब्दशे
षं तु तत्खेट युगभाब्दकैः उद्धरेत्तद्युवृन्दः स्यात्सर्वत्रै
वं विपर्यये ९५ कर्त्तव्यं स्वधिया सर्वं स्वस्वाऽवयवशे
षकैः

## मध्यमानयनम्

खेटेऽहर्गणजे
क्षेपं युक्त्वा तन्मध्यमं भवेत् ९६ लंकासूर्योदये कि
म्वा तु स्वक्षेपवशाद्भवेत् तच्चरस्थानभेदाभ्यां संस्कृ
तोऽर्कोदये भवेत् ९७ मध्यो मध्यजवांशाग्रान्सूर्यस्य च

---

* गुरु मध्यसंशादिकम् ३।१८।५८ युक्त्वा सूर्यसिद्धान्तीयो गुरुः स्यात्

रलिप्तिकान् स्वर्णानिन्यस्वगोलात्तथां लङ्कोदयिकमध्य-
मे ९८ दत्वातत्स्यात्स्वाऽपरप्राङ् मध्यरेखोदये रवेः
भूपिण्डयोजनैर्भक्तं मध्यगत्यंऽशकाहृतम् ९९ पश्चा
त्प्राग्योजनौघंतुस्वर्णंदत्वांऽशकादिकम् मध्यरेखोदयो
द्भूते मध्येस्वाऽर्कोदये भवेत् १०० मध्यं चाऽथयुतं कृ-
त्वाशाकेगोघनरामकान् विज्ञेया वत्सराश्चाष्टहृकृतम
स्यकलेर्गताः १०१ वैवस्वताह्वयस्यैव सप्तमस्य मनोः क-
लेः मानंगतकलिं हित्वाशेषं भोग्यकलिर्भवेत् १०२

## अथसम्वत्सरानयनम्.

चक्रघ्नैर्यातभाब्दैस्तु युक्तं राश्यादिकं गुरोः मध्यं दशो
न्नितं खांगतष्टं सम्वत्सरं भवेत् १०३ यन्मध्याऽजाऽ
र्कसंक्रान्तिकाले सम्वत्सरं भवेत् जीवमध्यमजं तत्तु
मन्यते ह्यायनेऽखिले १०४ यत्तु सम्वत्सरो मध्याऽजाऽ
र्कसंक्रमणं नहि प्रस्पृशत्येव तल्लोपं याति सम्वत्सरा
ह्वयः १०५

## प्रकारान्तरेणसम्वत्सरानयनम्.

अर्कघ्नां गुरुभाब्दास्तु युगेसम्वत्सराः स्मृताः तेभ्यस्वा

वर्षे
अस्वनेत्राग्निवेदासास्त्वेकेहायने १०६ लब्धंसम्वत्स-

अग्रसंवत्सरस्य मा· दि·४घ·१३प·१२
रंत्वेकंपूर्णंभूत्वापरस्यच सम्वत्सरस्यतन्मासपूर्वंभव-

संव·१मा०दि·४घ·१३प·१२
तितद्गतं १०७ तत्तुसम्वत्सरस्यैववर्षाद्यंध्रुवकं भवेत्

१७७८ १।०।४।१३।१२ ११।२८
शाके नागाद्रिजीमूतं हित्वाशेषाद्गतंध्रुवम् १०८ ईशै

१४७।१२ मा·११ दि·२८घ४७प१२
रष्टयमैश्शैलसागरैः करभूमितैः मासाद्यैः संयुतंकृत्वा

वृ राशिगणाः
तत्राऽब्दा जीवभव्रजः १०९ याताः सम्वत्सराःस्युस्त-

सम्वत्सरस्य गतम् मा·दि·घ·प· मे
द्वर्त्तमानाऽब्दकस्यच स्याद्यातमासपूर्वंतु मध्याऽर्जा

स्त्र विगतराशि वृ अंशाद्यं
ऽर्कक्षणोद्भवम् ११० कृतराशिगुरोर्मध्यं भागाद्यंत्वऽ

१२ प्रथम दिनाद्यं दिना३० अधिकाः३० मकाः मा
र्कताडितम् स्यात्तदादिमतेघस्रपूर्वंसम्वत्सरस्यच १११

## वर्षशेषफलानयनं भाब्दशेषफलानयनम्

* १२ ३०
वर्षशेषमिनघ्नंतु हारासंमासकाः स्मृताः खत्रिघ्नं

---

* शाके १७९८ फाल्गुन दिन १८ गते भौमेदिनगणः ७६३३ तद्गुरुभं ३६४२२० वर्षघ्नः २७८००९१२६० राश्यब्दशेषं १२०२१७३४३२ राशिशेषं २२४८२०७३२ अंशशेषं ४३२९५०६४८ घटी शेषं ७३०३५३६३२ पल शेषं १२१७४३६५६४ लब्धंराशिचक्रादिकं वर्ष १ राशि ९ अंश ४ घटी १६ पला २७ दिनगण भवगुरुः भगणादि अर्थाद्राशिचक्रादिः १।९।४।१६।२७ शाके १७९९ मध्यार्कचक्रपूर्णे शुक्रवासरे गुरुमवर्षादिकं २।८७।१७।१ शाके १७९९ शुक्रेदिन ७६७८ गणेगत संवत्सरादिकं संव·२२ मा २ दि· २७ घ·२४ प·१२ संवत्सरध्रुवकं वर्षादिः १।०।४।१३।१२.

मासशेषं तु हार भक्तं दिनाः स्मृताः ११२ दिनशेषादिकाः

६०  घ.प.

स्वांगनिघ्ना हार विभाजिताः घट्याद्याः कीर्त्तिताश्चैवं

राश्याद्याः  राशीवृर्षशेषजाः

स्युर्भाद्या भाब्दशेषजाः ११३

## अथ वारप्रवृत्तिज्ञानम्

निजव्यक्षदेशोदयकाले  वारप्रवेशनं  तत्रसूर्योदये  सू.

निजव्यक्षोदयकस्य कालस्याह्वारवेशनम् भानोश्चर-

प्रथमं  अनंतरम्  काले  सूस्रे

मितेऽन्यस्वगोले प्रागपरक्षणे ११४ वारप्रवेशनं लोके

सू  सू.

गीयते भास्करोदयात् लंकासूर्योदये काले वारारंभं

परे विदुः ११५.

## अथ पूर्वपश्चिमदेशान्तरज्ञानम्

सू  क्रां  ११४।३५।२४

भास्कराऽपक्रमांशानां चक्रज्याऽर्द्धलवादिकम् चक्रव्या-

क्रां  २३।१८।१४

सलवैर्निघ्नं क्रान्तिकर्णलवोद्धृतम् ११६ तत्फलं भुजजी-

सू  क्रां

वास्यात्तस्याः स्युर्ये भुजांशकाः ते ज्ञेयास्तु रवेः क्रान्ते

भुजां  शं कु: १२  छा

रऽपमप्रद दोर्लवाः ११७ नामध्याऽह्न प्रभाकृत्योर्यो

कर्ण  १३।१५।४।५३

गमूलं श्रुतिर्भवेत् तत्कर्णेनार्थदं भक्त्वा मध्याह्नज्या

प्रकीर्त्तिता ११८ तस्याश्चक्र भुजांशास्तु विज्ञेया उ-

९०

न्नतांशकाः स्वांकसुन्नत भागोनं कृत्वा तेस्युर्नतांश-

[*१] [फलांशयो]
का: ११९ तुल्यगोलेऽन्तरं कृत्वा तन्नतांशाऽक्षभा-
[क्रां]
गयोः अध्यत्वेऽक्षेक्षभिन्नैकदिक्कं तदऽपसं भवेत्
[फलांश]
१२० भिन्नगोले युतिं कृत्वा चाऽक्षभागनतांशयोः
[*२] [अन्य] [म] [क्रां]
अक्षांशाऽपरदिक्कं तु जायते खेचराऽपमम् १२१
[स] [क्रां] [क्रां] [भु] [उ]
एवं यास्याद्रवेः क्रांतिस्तस्याः क्रान्ती ददो लवाः सौ
[वृद्धिपक्षक्रां]
म्याश्चेच्चयक्रान्त्युत्था विज्ञेयाः संस्कृतांशकाः १२२
[क्षयपक्षक्रां] [उ] [१८०]
चैत्क्रा सक्रांतिजाः सौम्याश्चक्राऽर्द्धशेषुवर्जिताः
[द] [भुजां]
कार्यास्ते संस्कृतांशाः स्युर्याम्या बाह्वंशका यदि
[वृद्धिपक्ष क्रां] [१८०]
१२३ वर्द्धनपिक्रमादुत्थाः षड्राशीनां लवान्विताः संस्कृतां-
[क्षयपक्ष क्रां] [द]
शाः स्मृता ह्रासक्रांतिजाश्चेत्तु दक्षिणाः १२४ चक्रां
[३६०]
शेभ्यो निताः कार्या जायन्ते संस्कृतांशकाः संस्कृतां
[भुजनांशान्] [व्यस्तं]
शेषु मार्गांशान् वामं दत्वा भवेत्स्फुटः १२५ एतत्स्फुटो-

---

*२ अक्षांशाः दक्षिणाश्चेदुत्तरदिक्कम् उत्तराश्चेद्दक्षिणादिक्कम्.

---

*१ नतांश फलांशयोस्तुल्यगोले नतांशेभ्योऽधिकाः फलांशाश्चेत्तत्र फलांशादिग्भिन्नदिक्का क्रांतिः स्यात् तुल्यगोले नतांशेभ्योऽल्याः फलांशास्तत्राक्षांशादिग्भिन्नदिक्का क्रांतिस्यात्.

न्मितंयेनमध्यमेनरवेर्भवेत् प्रस्फुटं भास्करस्यैवत-
न्मध्यंस्याद्दिनाऽर्द्धजम् १२६ घस्रार्द्धस्यकलान्ह
त्वामध्यवेगांशकादिभिः तद्घटीवदनाहित्वातन्मध्येसू-
र्यमध्यमः १२७ जायतेस्वपुरस्यैव भास्करस्योदयेखलु
तत्स्वदेशोदयान्मध्याज्जातंस्याद्यत्स्फुटंरवेः १२८
तत्क्रान्त्युत्थंचरंस्वर्णंस्वांऽन्यदिक्कं घटीमुखम् हत्वा
मध्यजवांशाद्यैर्भानोस्तल्लिप्तिकादिकम् १२९ द-
त्वाऽर्कस्योदयाज्जातेस्वस्थानस्याऽर्कमध्यमे भा-
नोर्मध्योच्यतेभानोश्च स्वव्यक्षोदयेखलु १३० लंका
सूर्योदयेभानोर्यन्मध्यंस्याद्दिनौघजम् तद्भेदमध्यमे
भानोः स्वव्यक्षाऽ. र्कोदयेभजे १३१ कृत्वाशेषंक-
लापूर्वंहत्वाभूवृत्तयोजनैः भक्त्वालिप्तादिभिर्भा-
नोर्मध्यवेगस्ययत्फलम् १३२ लंकास्वव्यक्षयोर्मध्यं
तज्ज्ञेयंयोजनादिकम् लंकास्वव्यक्षयोर्मध्यंयत्तद्दे
शान्तरंभवेत् १३३ स्वव्यक्षाऽर्कोदयान्मध्याल्लं-
काऽर्कोदयमध्यमम् चेद्हृहंमध्यरेखायाः पूर्वस्या

स्वस्थलं भवेत् १३४ न्यूनं चेन्मध्यरेखायाः स्वस्था-
नं पश्चिमे भवेत् स्वस्थानं यदि पूर्वस्यां पूर्वदेशान्तरं
भवेत् १३५ स्वस्थानं पश्चिमायां चेत्पश्चाद्देशान्तरं
भवेत् तत्प्रागृणं धनं पश्चाज्ज्ञेयं देशान्तरं बुधैः १३६
खांगसावनलिप्ताश्च स्वदेशांतराभिधाः योजनाः
पूर्णभूपिण्डयोजनैः परिभाजिताः १३७ फललिप्ता-
दिकं पूर्वपश्चाद्देशान्तराभिधम् मध्येकालान्तरं मध्य
रेखास्वस्थानयोर्भवेत् १३८ अतिदीर्घनरच्छायाग्राह्या
ऽस्मिन्सूक्ष्मकर्म्मणि यद्दृक्स्वार्द्धेऽपमाऽभावो जायते
ऽहस्करस्य च १३९ तन्मध्याह्नप्रभासूक्ष्माऽक्षाभा-
तुल्याथवा भवेत्.

## अथक्षेपकलाक्रमः

सू भानोर्द्व्यंगकुभूयुग्मा चं श्चन्द्रस्याष्टघनाः
स्मृताः चं·उ· चन्द्रोच्चस्येषुदेवांकाः राहोः स-
सांकाग्नीन्दुपाणयः राहो मं स्सोब्ध्यगभून्या-
ग्ना भौमस्याऽथ बु विदस्तथा १४१ षट्खषट्

क्षेपकाः राश्यादयः

| सू | चं | चं·उ· | राहु | मं | बु | बृ | शु | शं |
|---|---|---|---|---|---|---|---|---|
| ११ | ० | ५ | ११ | ५ | १० | १० | ९ | २ |
| २२ | २ | ५ | २६ | २९ | १६ | २९ | १९ | ९ |
| ४२ | ५८ | ३५ | ३७ | ७ | ४६ | १७ | ३९ | ३० |

खाब्धयः बु सप्तपक्षाश्वांकभुवो गुरोः शु शुक्र-
स्यांकनगाकाष्टवह्नयः कीर्त्तिताः शं शनेः १४२
शैलशक्रयुगाः लंकार्कोदये क्षेपलिप्तिकाः शून्या-
हर्गणघ्नोत्थलंकाऽर्कोदयकालिकम् १४३ यत्खे-
ट मध्यमं क्षेमं तज्ज्ञेयं गणकोत्तमैः घस्रौघतष्टकां
कोत्थं खेचरं ध्रुवमीरितम् १४४ अभ्राचलायुताऽ
हानितष्टकोंकः प्रकीर्त्तितः घस्रौघः खखखखाश्वैः
शेषितः शेषउच्यते १४५ तल्लब्धघ्नध्रुवं क्षेपयुक्तं
शेषजखेचरं युक्त्वा तद्ग्रहं मध्यं स्याल्लंकाऽर्कोदय-
कालिकम् १४६

## निजस्थानभूमण्डलानयनम्.

भूवृत्तयोजनैर्निघ्नाल्लम्बांशज्यालवादिका

* १४४।३५।२५ मण्डलम्

चक्रव्यासांशकैरासानिजभूज्ञाममीरितम् १४७

निजव्यक्षज्ञानम्. देवदैत्यांशवासीनांस्वस्था-
नाद्दक्षिणोत्तरम् देवदैत्यांशयोस्संधिदेशंस्वव्यक्ष
मुच्यते १४८

## स्वव्यक्षार्कोदयान्निजदेशार्कोदयज्ञानम्.

स्वव्यक्षाऽर्कोदयात्कालात्स्वस्थाने भास्करोदयम्
प्राक्पश्चाद्दैव भागेतु स्वर्णेस्सूर्यचरोन्मिते १४९.
ज्ञेयंदैत्यांशकेऽप्येवंदैत्यांशेदक्षिणोत्तरम् देवभा-
गक्षितोसौम्य याम्यंस्वर्णंचरंभवेत् १५०

## चरसंस्कारोपपत्तिः

देशस्वव्यक्षयोर्भानोस्तच्चरंचोदयाऽन्तरम् यतो
भवतिस्वव्यक्षदेशाऽर्कोदयकालिके १५१ मध्यमे-
भास्करादीनांदीयतेऽत्रततोरवेः स्फुटोत्थचरसंस्का
रंद्व्यर्णंतद्विपर्य्ययम् १५२ लंकासूर्याऽस्तकालो-
त्थरवेर्देयंघनाऽधनम् स्वर्णंतत्रस्फुटार्को-
त्थचर संस्कारकं तथा १५३

* चक्रव्यासांशानांपिण्डपलां ४१२५२४

## देशान्तरसंस्कारोपपत्तिः

पू  प                    स्व              पू  प
लङ्कातः प्राक्परेदेशेस्वव्यक्षेभास्करोदयम् प्राक्पश्चा
        मध्यरेखा          पू  प              ऋ  ध
ज्ज्ञायतेयस्माद्रेखा पूर्वापरस्थले १५४ क्षयस्वंदीय
   ग्र
तेतस्मात्खेटेदेशान्तराभिधम् स्वस्थानान्मध्यरेखा-
      पू  प                              ३६००
न्तंयेस्युः पूर्वापरान्तरे ११५ योजनाः पूर्णभूवृत्तयो
                   निजभू मण्डलेन
जनघ्नास्तु भाजिताः स्वकुशाभेनस्वव्यक्षाल्लंकान्त्तं
                     गृहात्                    पू
योजनास्स्मृताः १५६ स्वागारान्मध्यरेखान्तं प्राक्
प                                       स्वभू मण्डले
पश्चाद्योजनान्तरम् मध्यगत्यंशकैर्हत्वा निजभूशा
मयोंजनैः १५७ भक्त्वांलब्धंफलं भागपूर्वदेशान्त-
रं भवेत्

## मध्यरेखाज्ञानम्.

 उ  द                          खण्ड
सौम्ययाम्यान्तगंव्यक्षाद्यत्सूत्रं वर्षमध्यगम् १५८
देवांशवासि नां सौम्यान्तसुमेरुपर्य्यन्तम्    दैत्यांशवासिनां याम्यान्तं कुमेरुपर्य्यन्तम्
तत्सूत्रंस्वांशवासीनांमध्यररवाप्रकीर्त्तिता व्यक्षाग-
च्छान्तरस्थानांपूर्वाचार्य्यविनिर्मिता १५९ मध्यरेखा
              उज्जयिनी सुमेरु
यथालङ्काऽवन्तिकामेरुमध्यगा व्यक्षेस्वमध्यरेखा-
         ङ
याः मूलेसूर्योदयेतथा १६० मध्याऽह्नेवाऽस्तकाले
       ०द्युन्याहर्गणे
चरान्यऽर्द्धेस्वाऽभ्रवासरे मध्यमाः क्षेपका ज्ञेयाः

संस्कृतास्ते स्वदेशजाः १६१ स्वव्यक्षे च निजस्थाने मध्याऽह्नः स्यात्समक्षणे यद्ग्रन्थोक्तस्तु लंकायाः मध्याऽह्ने खेचरो भवेत् १६२ तत्खेटे चर संस्कारं नहि देयं विचक्षणैः तद्देशान्तर संस्कारं देयं तत्खेचरे तथा १६३ एवं स्वव्यक्षरात्र्यर्द्धे स्वस्थाने स्यान्निशादलम् तद्रात्र्यर्द्धोद्भवे खेटे तद्देशान्तर संस्कृतिं १६४ देयं तच्चर संस्कारं देयं नैव हित ग्रहे

## अथ मिश्रकालिकग्रहानयनम्.

वर्तमानदिनौघोत्थ लंकाऽर्कोदयकालजम् १६५ खेचरं स्वजवाभ्यूनं कृत्वा मिश्रे खगो भवेत्

**मिश्रज्ञानम्.** भानोस्सावन घस्राऽर्द्धं स्वव्याऽर्द्धं गरपूर्वजैः १६६ देशभेदकलैर्मध्यरेखायाश्चोनसंयुतम् मिश्रं पंचांगगोत्रं तत्सावनं स्यात्कलादिकम् १६७ **मिश्रकालिकग्रहादिष्टकालिकग्रहानयनम्.** तत्र पंचांगजातीष्ट मिश्र भेद कला हतम् भागाद्यं स्वजवस्वर्णं स्वेष्टे मिश्राऽधिकेऽल्पके

१६८ दत्वामिश्रोत्थरवेटस्यलिप्तादौस्वेष्टजो भवेत्
रवेटश्चाथ- **चालनदानोत्पत्तिः** स्वमध्यादौम-
ध्यवेगादिचालनम् १६९ देयंस्वर्णंधनर्णंतुवक्रवेगे
तदन्यथा **मिश्रोत्पत्तिः** मिश्रकालेहिलङ्कायां
शन्यःऽर्द्ध्ंसमयंभवेत् १७० **चरकुलज्ञानम्.**
सावनाख्यचरंज्ञेयंस्वस्वाऽपक्रमजंचरम् वार्ष्टथां-
गाख्यचरंज्ञेयंतच्चपंचांगजातिकम् १७१ वावार्ष्टथां
गचराऽर्द्धोत्थंयच्चरंतुकलादिकम् तद्वार्ष्टथांगचरं
ज्ञेयंताराणांभास्करस्यच १७२

## व्यावहारिकचरानयनम्.

ताराणांभास्करस्यापि मार्गांशैः संस्कृतस्यच प्र-
स्फुटस्यभुजर्क्षस्य संख्या यत्प्रमिता भवेत् १७३
तत्तुल्यचररवण्डैक्यंकृत्वा भोग्यचराऽर्द्धकम् हत्वा
तत्रांशकाद्यैस्तु भक्त्वाशून्याग्निभिःफलम् १७४ यु-
क्त्वातच्चररवण्डैक्येस्याच्चरंव्यावहारिकम्

## अथ चराङ्कुजांशानयनम्.

खंडान् प्रथमचर खंडात् ३०
चरे चरार्द्धान् हित्वाद्यात्खत्रिघ्नं शुद्धसंख्यकम् १७५
३० भुजांशाः
शेषखत्रिवधे भोग्यभक्ते युक्त्वाऽत्र दोर्लवाः स्युः
व्यस्ते
श्चैवं तु विपर्य्यस्ते हारं तत्र गुणं स्मृतम् १७६ गुणकं
तु स्मृतं हारं भाज्यमेव फलं स्मृतम् **चरखण्डान-**
१० अक्षभा प्रथमचर खंड
**यनम्** दिग्घ्नापलप्रभापूर्वस्याच्चराऽर्द्धं पलादि-
८ पलभा द्वितीयचर खंड ३ वा १३/३ पलभा
कम् १७७ नागघ्ना मध्यमं त्वेकवह्न्यंशो घ्नादशा-
तृतीयचर खंडम्
हृता अंत्याख्यं च **परदेशाक्षप्रभानयनम्**
खं
चराऽर्द्धानां योगं स्वेष्टचरोद्धृतम् १७८ अन्यदेश
प्रथम खंडेन
चरेणाघ्नं तत्फलं तु पलादिकम् स्वप्राक्चरदलेन घ्नं
योग १०
चरखण्डैक्य भाजितम् १७९ दिग्भक्तं तत्फलं त्वऽ
पलभा १
न्यदेशेऽक्षप्रभा भवेत् रूपतुल्याऽक्षभादेशे त्वे-
१ ३० क्रां चपा ९।५५।२
कराशिभुजांशकैः १८० क्रान्त्युत्थं तु पला पूर्वं यच्च
गुणस्यात् १० १०
रं प्रस्फुटं भवेत् तदऽत्राऽत्रांशहारस्य गुणस्यापि
९।५५।२ ९।५५।२ २ क्रां
स्थले स्फुटः १८१ स्यात्तथातां द्विभोत्पन्नाऽपक्रमोत्थ
८।३।९ गुणस्यात् ८
चरे त्यजेत् शेषपलादिकं सूक्ष्ममऽत्र नाग गुणस्थ-
चरखण्डान्तरम् ३।१७।२९ गुणस्यात् क्रां
ले १८२ चरयोरन्तरं यत्स्याद्द्वित्रिभोत्थाऽपमोत्थयोः

सत्र्यंशात्रिगुणास्थाने विकलाद्यं गुणं स्फुटम् १८३
स्वस्वस्पष्टगुणघ्नाऽक्षाभास्यात्स्पष्टचरार्द्धकम्

## चरसंस्कारदानस्थानज्ञानम्.

मस्फुटे मध्यमादौ च सूर्यादीनां तु केवलम् १८४ दीय
तेऽर्कापमोत्पन्नचरसंस्कारकं खलु **तात्कालिक-
ग्रहज्ञानम्.** सावनेष्टकलोत्पन्नं खेटं तात्कालि-
कं मतम् १८५ **सूर्यस्यवार्ष्यांगदिनार्द्धज्ञानम्**
भानोर्व्यक्षदिनाऽर्द्धं तु वार्ष्यांगं यत्प्रजायते तत्सूर्या
ऽपमसम्भूतचरेणैव हि संस्कृतम् १८६ तद्वार्ष्यां
गदिनाऽर्द्धं तु भास्करस्य समीरितम्

## सावनेष्टरात्र्यर्द्धज्ञानम्

भानोर्वार्ष्यांगघस्रार्द्धं युक्त्वाशून्याग्निलिप्तिकान्
तद्वार्ष्यांगेष्टरात्र्यर्द्धं जायते चाथ वा रवेः युक्त्वात
द्रात्रिखण्डन्तु सावनद्युमितौ तथा १८८ जायते स्वेष्टरा-
त्र्यर्द्धं वार्ष्यांगं तत्कलादिकम्

---

* ६।४० पलभादेशे चरखंडाः ६६ ५३ २१ / ६ ४१ ५६ / ५३ ० ४०

स्वव्यक्षेष्टराश्यर्द्धज्ञानम्. स्वव्यक्षेष्टनिशाः
र्द्धस्यात्स्वेष्टराश्यऽर्द्धसम्मितम् १८९.

लंकाराश्यर्द्धज्ञानम्. स्वेष्टराश्यऽर्द्धलिप्तादौपू-
र्वपश्चिमदेशजान् देशभेदकलान्दत्वास्वर्णेतन्मि
श्रमुच्यते १९०

## अर्कापरखेटानांचास्तोदयकालोप-
## योगिचरकुलज्ञानम्.

सूर्यसन्निगतानांच ह्येकमऽस्तोदयंभवेत् द्वितीयं
निजदृग्वृत्तदेशोचाऽस्तोदयंभवेत् १९१ ऋतसूर्य
खगानांचताराणांद्विविधोदये द्विप्रकाराऽस्तका-
लेचयच्चरंअत्रयत्रच १९२ दीयतेतत्रतत्रसावना
ख्यचरंखलु तत्राऽप्यऽर्कचरंज्ञेयंसावनाख्यचरंबु
धैः १९३ देशान्तरकलाकुलज्ञानम्.

वार्ष्यांगैः षष्टिभिर्लिप्तैः सावनैश्चक्रकुण्डलम् परि-
भ्रमतिभानुश्चततस्ताल्लिप्तिकादिकम् १९४ प्राक्
पश्चाद्देशजंमध्यरेखातः प्राक्पराभिधम् देशान्तरे

कंमध्यरेखास्वस्थानमध्यजम् १९५ तत्पंचाङ्गकुलंत-
(देशान्तरम्)
च्चवार्ष्यंगिं सावनमतम् .

## अथसुखोत्थमध्यमाऽहर्गणयोरानयनम्

कस्मिंश्चि त्स्विष्टशाकेतु मेषाऽर्क दिवसा बुधैः १९६
(३६६) (*)
विध्यर्थषट्षडर्ग्नीनां घस्त्राणां पत्रमाचरेत् तत्प्रत्यः
(म) (स्व)
ह्नोद्भवान्खेटमध्यमान्कल्पितेष्टजान् १९७ निजदेशो
द्भवान्कृत्वापत्रेतांश्चैवसंलिखेत् पत्रेप्रत्यऽह्नजां
श्चैवाऽहर्गणाश्चा ऽपिसंलिखेत् १९८ पर्णेष्टंतुत
(अ.मध्यमा)
दिष्टंस्यात्तच्छाकंपर्णशाककम् तेमध्याः पर्णजा म-
(दिनगणाः)
ध्या विज्ञेया गणकोत्तमैः १९९ घस्त्रयूथाश्चतेज्ञे-
याः पर्णाऽहर्गणसंज्ञकाः पर्णशाकाऽन्तरं कृत्वास्वेष्ट

---

* उदाहरणम्ः- पर्णेष्टं वारादि ५।४६।७ पर्णदिनव्रजम् ८९५८ पर्णशाकं १८०२ स्वेष्टशाकं १८४१ शाकान्तरधनम् ३९ भेदादिनाद्यम् १४२४५।५।२९ सद्योदिनगणादिकम् २३२०३।५१।३६ इष्टं वारादिः ४।३२।० सद्यवारस्वेष्टवार ५।४ योरन्तरंवासरः१ ऋणं १ सद्यसंज्ञेह्न यूथे २३२०३ दत्वासद्यं दिनगणादिकम् २३२०२।५१।३६ पर्णेष्ट मध्याह्न १४।१७ इष्टमध्याह्नयो १५।१६ रन्तरम् घट्यादिकम् ऋणं ०।१ सद्येष्टे ५१।३६ दत्वास्पष्ट सद्येष्टं ५१।३५ स्वेष्टपर्णेष्टयोर्भिन्न देशत्वात्स्वेष्टदेशेसद्येष्टं ५१।३० स्वेष्ट ३२।० सद्येष्ट ५१।३० संदऋणगुणकं ११।३०

ध. ऋ.
शाके धनर्णकम् २०० शेषं शाकान्तरं ज्ञेयं पर्णशाका
शाकान्तरेण ३६५।१५।३१।३१।२४
ऽधिकोनके शाके तेन धनर्णेन वर्षमानं दिनादिकम्
अंतर ध ऋ दिनगण
२०१ हत्वा भेदं दिनाद्यं स्यात्स्वर्णं पर्णदिनव्रजे पर्णे
युक्ते वर्त्तमानवारे दिनगणादिके
ष्टघटिकाद्याढ्यं दत्वा तत्स्वेष्टवासरं २०२ घस्रवृन्दा
दिकं सद्यं विज्ञेयं तद्विचक्षणैः तष्टितं सप्तभिः सद्यं स-
द्यं स्याद्वारपूर्वकम् २०३ स्वेष्टवारोन्मितं सद्यवारं यत्र न
वारयोः
जायते घस्रयोरन्तरं स्वेष्टसद्ययोः सद्यसंज्ञके २०४
वारान्तरम् ध. ऋ. दिनगणे दत्वा दिनात् अधिके ध.
स्वर्णं दत्वाऽह्नि यद्यपि तु सद्यघस्राऽधिकोनके स्वेष्टवास-
न्यून ऋ. वर्त्तमानवारे दिनाद्यलिप्ते.
रसंज्ञे तु सद्यः स्यात्स्वेष्टवासरे २०५ पर्णेष्टदिवसा-
अधि
ह्नाऽर्द्धात्स्वेष्टघस्रदिनाऽर्द्धकम् ऊर्द्ध्वाऽत्यं लिप्तिका-
ध ऋ दत्वा
द्यं तु यन्मितं यदि जायते १०६ सद्येष्टे तन्मितं तर्हि स्व
सद्यस्येष्टं स्यात् अंतरं
र्णं दत्वा भवेत्स्फुटम् स्वेष्टसद्येष्टविश्लेषं स्वेष्टसद्याऽ
ध. ऋ.
धिकोनके २०७ स्वर्णं लिप्तादिकं ज्ञेयं गुणं तत्पण्डितो
भिन्नदेशम्
त्तमैः स्वेष्टपर्णेष्टयोर्यत्र नैकदेशं यदा भवेत् २०८
तत्र तर्हि तु सद्येष्टात्स्वेष्टदेशेष्टमानयेत् तत्सद्येष्टो
च्चतेतस्माद्दुक्तवद्गुणमानयेत् २०९ स्वर्णशाका

वेग
न्तरं त्वेक वर्षमध्यजवाहतं, स्वर्णं तद्दिनजे दत्वा मध्य
मे पर्णजे बुधैः २१० सद्यः कालो द्भवं मध्यं तत्रवेट स्याद्धि
जायते वेगं स्वर्णं गुणेनैव मध्याख्यं त्वेकं घस्रजम् २११
हत्वा दत्वा धनर्णं तु सद्यः कालोत्थमध्यमे इष्टकालोद्भ
वं तत्तु जायते खेटमध्यमम् २१२ विज्ञेयं सुखजं चाऽ
दिनगणं
यं मध्यमं वासरव्रजम् सुखाऽर्थं विलिखेत्पत्रमेकं
३६५।१५।३१।३१।२४
वर्षमितेस्तथा २१३ एकादि गुणितस्यैकं वर्षमध्य
वेग
जवस्यच .

## अथ ब्रह्मदिनमाने मन्दोच्चचक्राणि.

४३२००००००० 
दन्तवेदगुणाकोटि छेदाब्दाः परिकीर्त्तिताः २१४
दिने वर्षाः
छेदाऽब्दा ब्रह्मणो घस्रे सौराः संवत्सराः स्मृताः
सू ३८७
सू छेदाब्देषु रवेः सप्ताष्टाग्नयः परिकीर्त्तिताः २१५
मं २०४ बु ३६८
मं भौमस्य वेदखयमाः बु चन्द्रजस्याष्टषड्गुणाः
बृ ९०० शु ५३५
बृ जीवस्याभ्रखनन्दानि शु शुक्रस्येषुगुणेषवः
शं ३९ भगणाः
२१६ शं पक्षोर्नवाग्नयः प्रोक्ताः मन्दतुंग भवत्स
मं २१४
राः तत्रैव पातचक्राणि. मं शक्रदस्रा-

स्तु भौमस्य बु ज्ञस्याष्टगजसागराः २१७ बृ गी-
ष्पतेर्युगजीमूताः शु शुक्रस्याऽम्बिरखवेन्दराः शं
मन्दस्याक्षिरसांगास्तु हारसम्वत्सरेषु च २१८ प्रोक्ताः
पातभचक्राणि विलोमगतयो बुधैः

## ब्रह्मजन्मदिनाद्गताब्दानयनम्

गोघनाश्वाब्धिगोद्व्यद्रिगोभूद्व्यक्षाक्षवासरान् २१९
शाके युक्त्वा विधेर्जन्मकालात्स्युर्वत्सराणि हि
सृष्टितोगताब्दाः कल्पारम्भक्षणात्त्वाभ्ररवा-
ब्धिषड्व्योमतोयदैः २२० सौराब्दैः ब्रह्मणा सृष्टेः
कृतं तत्परिघट्टनम् ब्रह्मणोऽश्वपलैस्तुल्यैः षड्रस-
रव्यैर्विपलान्वितैः २२१ प्रपलैः षड्गुणैर्युक्तं कालं तत्र
गतं मतम् गोस्वरूपाग्निनागाष्टपंचाक्षांक निशा-
करान् २२२ युक्त्वा शाके सृष्टितोऽब्दा याताः
पूर्वबुधोदिताः

## ब्रह्मदिनारम्भाद्गताब्दानयनम्.

१ ※ १९७२९४७१७९

शाकेगोश्वधरासप्तयुगगोऽद्र्यद्रिगोविधून् २२३

गतवर्षाणि

युक्त्वाब्रह्मदिनारम्भाद्याताः सम्वत्सराः स्मृताः

५

ब्रह्मणोदिवसारम्भाद्याताब्दाः शरैस्ताडिताः २२४

१०००००० ७२ दिन ब्रह्मणः

कोट्याप्ताः द्विनगैराप्ता द्युकलाः स्युर्विधेर्गताः

मन्वन्तरा. ब्रह्मणोदिवसारंभंकल्पारंभमुदीरि-

७१ १

तम् २२५ एकसप्तयुगैस्तुल्यमेकमन्वन्तरं भवेत्

१ १७२८०००

एकमन्वन्तरस्यैवसंधिः सत्ययुगोन्मितः २२६ ख-

३०८४४८०००

खखाष्टाब्धिवेदाष्टखाग्नयः सौरवत्सराः एकम

न्वन्तरस्यैवविज्ञेयाश्चससंधयः २२७ कल्पारम्भ-

---

१ ※ शाके १८०१ सृष्टितोगताब्दाः १९५५८८४९८० सूर्यमन्दोच्च भगणौ ३८७ गुणिताः ७५६९२७४८७२६० तत्रसूर्यमन्दोच्चंच-क्रादि १७५।२।१७।१७।२६ पलावशेषं ७६८९६०००० शाके १७९८ फाल्गुन १८ गते भौमे मन्दोच्चाः राश्यादयः सू २।१७।१५।२६ मं ४। १०।२।४१ बु ७।१०।२८।३० बृ ५।२१।२२।२७ शु २।१९।५२।२१ शं ७।२६।३१।२४ पाताः मं १०।१९।५६।५६ बु ११।९।१९।३२ बृ ३। १०।१९।५६ शु १०।०।२०।४२ शं ८।१९।३९।१९

३७०७ मित

शाकेगो सह रामान् युक्त्वागतकलिर्भवेत् शत १०० वर्षेषु सूर्य मन्दोच्च भुक्ति विपला ६ $\frac{४८३}{५००}$ शतमित १०० वर्षेषु भौममन्दोच्च भुक्ति विपला ३ $\frac{३५५९६}{४८३७५}$ एकवर्षे बु. मन्दोच्च भुक्तिविपलाः ९।३८ एकवर्षे शुक्र शत भुक्ति विपलाः १६।१५ एकवर्षे गुरुपात भुक्ति विपलाः ३।८

१॥* १७२८०००

दिनात्सत्यतुल्यैस्सौराख्यवत्सरैः कल्पसंधिस्तु विज्ञे-

१८५०६८८०००

यः कल्पसंधिदिनान्ततः २२८ शून्याभ्राभ्राष्टनागा-

गता ६

गखाक्षाष्टाङ्कमितैस्तथा वर्षैस्ससंधयो यातास्तर्क

मन्वन्तराणि ते २२९ ततोस्य सप्तमस्यैव वैवस्वत-

२७ गता २८

मनोस्तथा सप्तनेत्रयुगा याता अष्टाविंशत्तमे युगे

सत्यायुगारंभदिनात् गत इष्टदिनांतम्

२३० सत्यारम्भदिनाद्यातकालं स्यात्तद्दिनान्तकम्

## अथ सूर्यभौमादीनाम्मन्दोच्चानयनम्.

गत

मन्दोच्चराशिवर्षघ्नाः सृष्टितो यातवत्सराः २३१ ह्म-

४३२०००००००

र वर्षोद्धृता मन्दतुंगं चक्रमुखं भवेत्.

## अथ भौमादीनां पातानयनम्.

गत स्वपात राशिवर्ष

सृष्टितो यातवर्षाणि पातचक्रहतानि च २३२ ह्मा

४३२००००००० राशिवर्षादि अर्थाद्भगणादि

र वर्षविभक्तानि पातं स्याच्चक्रपूर्वकम् राहुः

चं पात अर्थात राहुः

ग्लौपातं चन्द्रतुंगं च नैवाऽनेन समानयेत् २३३ मन्द

व्यस्त

केन्द्रसमाः पाताः विलोमगतयोदिताः पातराश्या-

---

*· सू. १ वर्ष मन्दोच्च भुक्ति र्विपला ६ प्रप ५७७

सू. १ दिने नन्दोच्च भुक्तिप्रपला घा ११९

---

१२
दिकंसूर्य्याद्धित्वापातःस्फुटो भवेत् २३४ मध्यवेगा
ऽधिके तुंगवेगे शीघ्रोच्चमादिशेत् उच्चवेगाऽधिकेम
ध्यवेगे मन्दोच्चमादिशेत् २३५

## अथ सूर्यभौमादीनां मन्दोच्चवेगानयनम्.

३६५।१५।३१।३१।२४ । ४३२००००००० १५७७९१७८२८०००
सौराब्दस्यदिनादिघ्ने हरिाब्दैः परिभाजिताः सूर्य
सू मं बु वृ शु श राशिवर्षा
भौमज्ञपूर्वाणाम्मन्दतुंग भवत्सरा २३६ लब्धं-
राशिवर्षादि जवं
भाब्दमुखं मन्दतुङ्गवेगमुदीरितम्.

## भौमादीनां पातवेगानयनम्.

मं बु वृ शु शवा: राशिवर्षा १५७७९१७८२८०००
पातानां भौमपूर्वाणां राश्यब्दाः परिभाजिताः २३७
१००० राशिवर्षादि
भूधरत्रैः खखखाब्धिघ्नैस्तत्फलं भाब्दपूर्वकम् पा-
गतिः गतिः
तवेगोच्यते नित्यंव्यस्तंपातजवं भवेत् २३८

## अथस्पष्टमन्दोच्चपातानयनम्.

शाकारम्भदिनात् गत
सौराऽहर्गणमार्गेणवत्सरारम्भवासरात् यातघ-
मन्दतुंगजादुत्थं मन्दोच्चं
स्राहतं वेगभाब्दपूर्वंफलं भवेत् २३९ मन्दतुंगज-
मन्दोच्च मन्दोच्च
वादुत्थंयुक्त्वातन्मन्दतुंगके प्रस्फुटं मन्दतुंगंस्यादे-
वं तत्पातवेगजम् २४० ऊनंपातस्फुटे कृत्वास्यात्पा-

तं त्विष्ट घस्त्र[दिन]जम् प्रस्फुटं मन्दतुंगं[मन्दोच्च] च विज्ञेयं त्वि-
ष्ट घस्त्र[दिन]जम् २४१ । ६५८

## श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविरचिते परमसिद्धान्ते मध्यमाधिकारस्तृतीयः ३

---

### अथ वृत्तव्यासोपपत्तिः

व्यासार्द्धवर्गाद्द्विगुणाद्यन्मूलं स्यान्महच्छ्रवः तु-
ल्ये चतुर्भुजक्षेत्रे तुल्यकर्णद्वयाभिधे १ व्यासस्या-
र्द्धमिते कर्णे तन्महच्छ्रवणार्द्धकम् ज्ञेयमादिभुजं
तद्वत्प्राक्कोटिः परिकीर्त्तिता २ व्यासार्द्धं व्या-
सखण्ड[अर्द्ध]घ्नं तन्महच्छ्रवणो[कर्ण]द्धृतम् [१*] प्राग्बाहुः[पूर्वभुज] पूर्वको-
टिश्च जायते पूर्ववत्खलु ३ तन्महच्छ्रवणं[कर्ण] पूर्वको-
टिकं ज्ञेयं विचक्षणैः व्यासार्द्धमन्त्यकोटिः स्याच्छू-
न्यमन्त्यभुजं मतम् ४ प्राक्[पू]कोटिवर्जितं व्यास-
खण्डमादिशरो[बाणः]च्यते शून्यमन्त्याभिधं बाणं[शर] विज्ञेयं

---

१* बृहत्पूर्णकर्णे व्यासार्द्धं बाहुः व्यासार्द्धकर्णे प्राग्बाहुः स्यात्

गणकोत्तमैः ५ कोटिंव्यासदलाद्धित्वातत्सर्वत्रशा-
रोच्यते बाणंव्यासार्द्धतोहित्वाकोटिः सर्वत्रकीर्त्ति-
ता ६ कोटिंबाणदलेयुक्त्वाचाऽग्रेस्यात्कोटिखण्डकः
व्यासार्द्धेऽक्षदलंहित्वास्यादऽग्रेकोटिखण्डकः ७
यत्तद्बाहुदलंतत्तुल्यऽग्रेदोःखण्डउच्यते दोःकोटि-
खण्डवर्गैक्यान्मूलंटेकस्तदुच्यते ८ व्यासाऽर्द्धाद्बा
हुखण्डघ्नाट्टेकाप्ताबाहुरुच्यते व्यासाऽर्द्धात्को-
टिखण्डघ्नाट्टेकाप्तात्कोटिरुच्यते ९ अस्माऽदस्य
भुजस्याऽर्द्धमऽग्रेदोःखण्डमुच्यते कोटिंव्यासदला-
द्धित्वात्वऽग्रेबाणस्तदुच्यते १० ज्याबाणानयनेचै
वंटेककोटिभुजादिकान् आनयेत्स्वाऽर्थपर्य्यन्तंवा-
रंवारंमुहुर्मुहुः ११ पूर्वबाहुकृतौयुक्त्वापूर्वबाण
कृतिंबुधैः तन्मूलमादिडोरः स्याद्द्वितीयेषुकृतौतथा
१२ द्वितीयंबाहुवर्गंतुयुक्त्वातस्यपदंतथा द्वितीयं
जायतेडोरंतृतीयेषुकृतौतथा १३ तृतीयंबाहुवर्गंतु
युक्त्वातस्यपदंतथा तृतीयंजायतेडोरमेवंडोरान्स

मानयेत् १४ तर्काब्धिमितवारोत्थं धीरैस्तद्गोरसं-
ज्ञकम् एकेनाऽक्षाब्धिभिर्वारैर्द्विघ्नेनपरिम-
३५१८४३७२०८८८३२ र्दयेत् १५ तद्वृत्तस्याऽ
ष्टमांशः स्यात्तन्भागैश्चसमाहृतः तद्बृहद्व्यासजंत्वे-
तद्वृत्तमुक्तं विचक्षणैः १६ दन्ताष्टाष्टाष्टखाश्व्यद्रि-
व्यब्ध्यष्टाऽऽशराग्नयः ३५१८४३७२०८८८३२
तद्वृत्तस्याष्टमेभागेकोणान्यत्र भवन्तिहि १७ इ-
ष्टव्यासाहतंवृत्तंतद्बृहद्व्यासभाजितम् इष्टविस्ता-
रजः स्वेष्टपरिधिर्जायतेकिल १८ इष्टवृत्तबृहद्व्या-
सनिघ्नंतद्वृत्तभाजितम् तत्फलंस्वेष्टवृत्तस्यविस्ता
रंप्रस्फुटंभवेत् १९ व्यासात्परिध्यानयनम्.
विष्कम्भंगजनागाभ्रतानैर्हत्वाविभाजयेत् तत्वांग
दिवसैर्लब्धंवृत्तंतत्परिधिर्भवेत् २० व्यासानयनं
वृत्तंतत्वांगघस्रघ्नमष्टाष्टाभ्रांकसागरैः भक्तंप्रस्फु-
टविस्तारंविज्ञेयंपण्डितोत्तमैः २१

## अथवृहत्कर्णोदाहरणम्.

यथात्रव्यासः ३००००००० व्यासाऽर्द्धः १५०००००० वर्गः २२५०००००००००००००० द्विगुणः ४५०००००००००००००० अस्यमूलंशतकजात्यऽवयवान्वितंसूक्ष्मंस्कर्णः २१२१३२०३ । ४३ । ५५ । ९६ । ४२ अस्याऽर्द्धंप्रथम भुजंजातंसाऽवयवं १०६०६६०१ । ७१ । ७७ । ९८ । २१ प्रथमाकोटिश्च १०६०६६०१ । ७१ । ७७ । ९८ । २१.

# अथ सूक्ष्ममूलानयनम्

मानंस्वाऽधोकुलानान्तुयत्रैवसमं भवेत् सूक्ष्मंस्यान्मपदंतत्रवर्गस्याऽपिघनस्यच २२

# सूक्ष्मवर्गमूलानयनम्

स्वाऽधोजातिप्रमाणेनवर्गंकिंपरिमर्द्दयेत् तत्रस्वाऽवयवंयुक्तमित्थंवेदादिभिर्मितम् २३ बहुवारंबुधैः कुत्वातन्मूलंचसमुद्धरेत् तत्स्वाऽधोजातिमानेन गुणनस्यदलोन्मितम् २४ वारंलब्धिमतोलब्धिमेवं साऽवयवंपदम् जायतेचाथवामूलान्छेषमेकंसम-

न्वितम् २५ कृत्वास्वाऽधोकुलस्यैवमानेनपरिता डितम् तद्वर्गाऽवयवंयुक्तं कृत्वातद्भाज्यमुच्यते २६ द्विघ्नेनैवकराद्धेन लब्धमूलेन भाजितम् भाज्यंचाऽवयवंस्थूलं मूलस्यैवहि जायते २७

## सूक्ष्मंवर्गमूलोदाहरणम्

यथामूलंसावयवं अंश ४ घटी २० पला ३० अस्य वर्गांकं जातम् १८।५१।००।१५।०० अधोजातिमानाहतम् १०८० एकावयवान्वितंजातम् ११३१ तदऽधोजातिमानाहतंसावयवंच ६७८६० तत्पुनरधोजातिमाना ६० हतंजातम् ४०७१६०० सावयवं ४०७१६१५ तदपिचस्वाऽधो जातिमाना ६० हतम् २४४२९६९०० साऽवयवंच २४४२९६९०० अस्यमूलंद्विवारं षष्टया ६० भक्तं लब्धं साऽवयवम् ४।२०।३० अथभिन्नवर्गमूलानयनम्.

भिन्नेंऽशस्यहरस्याऽपिसूक्ष्मं मूलं समानयेत् हार मूलोद्धृत भागमूलं सूक्ष्मपदं भवेत् २८

## अथ घनमूलानयनम्

स्वस्वाऽधोजातिमानेनत्रित्रिवारं घनांककम् हत्वा स्वस्वाऽवयवकं युक्त्वैवं तत्त्रिवारकम् २९ षड्वारं नववारं वाकृत्वातज्जायतेघनं तन्मूलंगुणनस्यैव व्यंशके नैवसम्मितम् ३० एकवारादिकं भक्त्वा स्वाऽधोजात्युन्मितेनच लब्धं घनपदं मूलं सूक्ष्मंज्ञेयं साऽवयवंबुधैः ३१ घनमूलोदाहरणम्.

यथामूलंसाऽवयवं अंश ४ घटी २० अस्यघनांकं जातं ८१।२२।१३।२० अयमऽधोजातिमानाहतं त्रिवारंसाऽवयवंजातं १७५७६००० पुनर्द्विवारमधोजातिमानाहतंसाऽवयवंच ६३२७३६००००० तत्पुनरेकवारंच ३७९६४१६०००००० अयंघनांकंषड्वारगुणनजम् पुनरयंत्रिवारंस्वाऽधोजातिमाना ६०हतंसाऽवयवंचाऽयंजातम् ८२००२५८५६००००००००० अयंनववारगुणनजातं घनांकम् ८२००२५८५६००००००००० अस्यमूलम्

९३६००० अत्रगुणननवप्र९ मितंगुणान ९ तृतीयां-

शं ३ रासप्रामितं अधोजातिमानं ६० अनेन मूलं

९३६००० भक्त्वालब्ध १५६०० अयमपि ६० भक्तं

लब्धं २६० अयंचाऽपि ६० भक्तंलब्धं ४ शेषं २०

मूलं साऽवयवम् ४।२०।०।० घनांकंचेत् ३७९६

४१६०००००० मूलम् १५६०० अत्रगुणनंषड्गुन्नि

६ तम् गुणन ६ तृतीयांशं २ यमोन्मितम् अधो-

जातिमाने ६० नमूलं १५६०० भक्त्वालब्धं २६०

अयमपि ६० भक्तंलब्धंमूलंसाऽवयवं ४।२०।०

घनांकंचेत् १७५७६००० मूलं २६० अत्रगुण-

नम् त्र्युन्मि ३ तं गुणन ३ तृतीयांशम् १ तदुन्मि-

तं १ वारमधोजातिमाने ६० नमूलं २६० भक्त्वा

लब्धंमूलंजातंसाऽवयवम् ४।२०

## अथ घनमूलावशेषस्यस्थूलफलानयनम्

घनमूलाऽवशेषंतुस्वाधोजातिप्रमाहतम् (मानाहत) कृत्वा-

(निज) स्वाऽवयवंयुक्तातत्रतद्भाज्यमुच्यते ३२ लब्ध

मूलस्यवर्गेणत्रिघ्नेनत्रिंयुतेनच भाज्यंसमुद्धरेत्स्थू-
लं मूलस्याऽवयवं भवेत् ३३

## अथभिन्नघनमूलानयनम्

भिन्नेंशस्यहरस्याऽपिसूक्ष्मं मूलं समानयेत् छेद
मूलोद्धृतंचांऽशमूलं सूक्ष्म पदं स्मृतम् ३४

## अथज्योपपत्तिः

अथवृत्ताऽष्टमे भागेस्युः कोष्टान्यष्ट भास्कराः द्व-
योः पृष्टाऽग्रकोटयोस्तु यद्विश्लेषदलं भवेत् ३५
तेनाद्यालघुकोटिस्तु कोट्यऽर्द्धमध्यमे भवेत् द्वयो
पृष्टाऽग्रभुजयोर्यद्विश्लेषाद्दलं भवेत् ३६ तेनाद्यो
त्यभुजोर्मध्ये दोः खण्डं जायतेतयोः पृष्टाऽर्द्धऽग्राऽ
र्द्धयोर्योगंमध्यमंजायतेतयोः ३७ पृष्टाऽग्र भुजयो-
रैक्याद्युग्मात्साद्यत्फलं भवेत् तद्द्वयो र्भुजयोर्मध्येदोः
खण्ड पूर्ववद्भवेत् ३८ द्वयोःपृष्टाऽग्रकोटयोस्तु सं-
योगाद्यद्दलं भवेत् तत्तयोर्मध्यमे कोटि खण्डं पूर्वस-
मम्भवेत् ३९ दोः कोटिखण्डयोर्वर्गसंयोगाद्यत्पदं

भवेत् तत्प्राग्वदेकसंज्ञः स्याद्दोः खण्डव्यासयोर्व-
घात् ४० युग्मोत्थाद्देकभक्ताच्च तद्बाहुर्जायते किल
व्यासाऽर्द्धात्कोटिखण्डघ्नाद्देकाप्ता कोटिरुच्यते
४१ एवं नागार्ककोष्ठेषु बाहुं कोटिं समानयेत् ता-
न्बाहून्द्विगुणं कृत्वा स्युर्मौर्व्यः प्रथमाष्टमे ४२
कोटीन् युग्माहतं कृत्वा मौर्व्यः स्युश्चापराष्टमे वृ-
त्तस्याऽर्कांशकं त्वत्र राशिमेकमुदीरितम् ४३ सा-
र्द्धैकराशिपर्य्यन्तं विज्ञेयं प्रथमाऽष्टमम् ऊर्द्ध्वं वृत्तां-
घ्रिपर्य्यन्तं जायते चापराष्टमम् ४४ इष्टज्यामान
येच्च स्ववृत्तव्यासाऽनुपाततः अतोग्रे मौर्वी.

अतोऽग्रे मौर्विकां वक्ष्ये कोष्ठैश्चाष्ट दिवाकरैः ४५
१ ईशषड्गानि नेत्राक्षियुग्मसायकमार्गणाः ३ ख
त्रिनागाश्विनागानि ४ पञ्चरामाब्धिदिग्भुवः ४६
५ शैलाग्निखाष्टविश्वानि ६ दन्तषट्पञ्चषड्भुवः ७
जातिदन्ताङ्कचन्द्राणि ८ वेदखाष्टखजातयः ४७
९ नागागाग्न्यष्टसिद्धानि १० त्र्यब्धिनन्दाक्षभानि च

११ शैलतानाग्निखत्रीणि १२ व्योमाब्ध्यभ्रकुनि-
र्जराः ४८. १३ कद्व्यक्षाष्टाक्षरामानी १४ भाष्टखां-
गाष्टवह्नयः १५ खांकपञ्चाग्निभूवेदाः १६ शैला
श्वाशाब्धिसागराः ४९. १७ शैलाब्ध्यक्षाष्टषड्वेदाः
१८ खाभ्राभ्रांगनवार्णवाः १९ वेदत्र्यब्ध्यग्नियुग्मा
क्षाः २० जोब्ध्यष्टाभ्राक्षमार्गणाः ५०. २१ कब्धिदृ
ग्गजशैलाक्षाः २२ विश्वांगाक्षखषण्मिताः २३ द्व्यं-
गगोदन्ततर्काणि २४ शैलपिण्डाभ्रषड्रसाः ५१
२५ शैलाष्टेष्वद्रिनागांगाः २६ द्व्यंगनागेन्द्रपर्व
ताः २७ गोदिग्युग्माब्धिसमानि २८ नागदन्तांक
षण्णगाः ५२. २९ गोक्षपञ्चांगगोशैलाः ३०
गोश्वषड्गुणदृग्गजाः ३१ गोभ्राष्टाभ्राक्षनागानि
३२ षट्खांकाश्वागमङ्गलाः ५३. ३३ कद्रिता-
नाभ्रनन्दानि ३४ भूखाभ्रद्व्यग्निखेचराः ३५
षड्गोंकाष्टाक्षखेटानि ३६ पोक्षांकाक्षाष्टखेचराः ५४
३७ शैलाश्वाष्टार्कखाभ्राणि ३८ कंगांगाकाग्निदि-

ङ्मिताः ३९ षट्खांगांगांगशून्याब्जा ४० ईशाब्ध्य-
ष्यंकदिङ्मिताः ५५. ४१ वेदमेघाभ्रयुग्मेशाः ४२
पोंकाष्टांगाब्धिशंकराः ४३ त्र्यश्वाक्षाभ्यश्वभूचन्द्राः
४४ सोऽभ्रद्व्यक्षखभास्कराः ५६. ४५ षड्गोश्वांगा
श्वियुग्माब्जाः ४६ जोदेवाभ्यक्षभास्कराः ४७ वेदा-
भ्यष्टांकशैलार्काः ४८ भूपिण्डांगाभ्रविश्वकाः ५७.
४९ गोश्वषड्दन्तविश्वानि ५० सोऽश्विखांकाक्षवि-
श्वकाः ५१ निद्व्यस्त्र्यक्षाष्टविश्वानि ५२ नागांगाक्षे-
शवासवाः ५८. ५३ गोक्षाश्वागाग्निशक्राणि ५४
षड्गोष्टाभ्यंगवासवाः ५५ नागाश्वांकांकनागेन्द्राः
५६ वेदखाभ्रागभूदिनाः ५९. ५७ त्र्यद्रिगोब्जा-
ब्धि घस्राणि ५८ वेदाष्टाष्टाश्वषड्दिनाः ५९ षट्
त्र्यश्वाभ्यंकघस्राणि ६० धिष्ण्याक्षांकाब्जषड्भुवः ६०
६१ जोतत्वाक्षाब्धिषड्भुन्द्राः ६२ भांकखाश्वांगकेव-
लाः ६३ देवाक्षांगांक भूपाणि ६४ पोश्वाभ्राश्वश्वि-
तोयदाः ६१. ६५ त्र्यक्षाक्षागाब्धिमेघानि ६६ चो-

षड्गोऽङ्कागतोयदाः ६७ गोखाग्न्यष्टांकजीमूताः ६८ षण्णागाक्षाग्निदृग्गदाः ६२. ६९ चोंकाश्वाष्टाब्धिनागाब्जाः ७० देवांकाग्न्यगकष्टदाः ७१ भूखखांकांकहस्त्यब्जाः ७२ जोंकांकाग्न्यब्धिगोभुवः ६३. ७३ जातिगोष्टाब्धिगोचन्द्रा ७४ स्त्र्यश्वागाग्न्यगगोभुवः ७५ खाक्षाक्षाष्टांकगोब्जानि ७६ भूतत्वाग्न्यब्धिखान्तकाः ६४. ७७ षट्सोष्टागाब्धिखाक्षीणि ७८ सिद्धाब्ध्यश्व्यगखान्तकाः ७९ चोंकाष्टांगांकखाक्षीणि ८० पंचाष्टार्कार्किपाणयः ६५. ८१ सोंकाक्षाक्षेन्दुपक्षाणि ८२ ऋक्षाष्टांकांगभूपमाः ८३ षट्सोंकाग्न्यंकभूयुग्माः ८४ इषाब्धिखाष्टेन्दुजातयः ६६. ८५ तत्वखाब्ध्यब्धिदृग्युग्माः ८६ त्रिइष्वंकाक्षांगदृक्कराः ८७ षट्त्र्यश्वांकाष्टदृक्पक्षाः ८८ त्र्यंगाब्ध्यग्निकुदोंतकाः ६७. ८९ इषभेन्द्वग्निटोक्षीणि ९० चोक्षांगाश्व्यांगटोन्तकाः ९१ ससेशाब्ध्यष्टटोपक्षाः ९२ खांकाब्ध्यश्वखचो-

न्तकाः ६८. ९३ इयश्वागाश्वाग्निसिद्धानि ९४ टेगांकाश्यसचोन्तकाः ९५ कंगाश्रागागसिद्धानि ९६ षट्षट्खाश्राश्रपोकराः ६९. ९७ सोश्वांकजातिपोक्षीणि ९८ श्यंकाश्वेष्वाब्धिपोन्तकाः ९९ शक्रासाष्टांगतत्वानि १०० सोग्निभूक्कं कपोयमाः ७० १०१ श्यंगषड्विश्वषट्पक्षाः १०२ कड्कखाङ्गाग्निषट्कराः १०३ गोकब्ध्यष्टेषुषट्पक्षाः १०४ सोब्ध्यंगाश्राष्टषट्कराः ७१. १०५ चोश्वभाश्राश्वपक्षाणि १०६ खाश्राष्टाब्ध्यक्षिसोन्तकाः १०७ त्रिइयगांगाब्धिऋक्षाणि १०८ श्यब्ध्यक्षाष्टांगभानि च ७२. १०९ जोतत्वाश्रांकऋक्षाणि ११० जोंगाष्टेशाष्टपाणयः १११ इयद्रयश्यश्यग्निपिण्डानि ११२ खाश्वागाब्ध्यक्षजोन्तकाः ७३. ११३ खांगखांगाश्वपिण्डानि ११४ हक्सिद्धाश्वांकजोयमाः ११५ घस्त्राश्यष्टेन्दुगोक्षीणि ११६ जोभांकाश्यंकपाणयः ७४. ११७ कग्निभूखांगगोपक्षाः ११८ कद्रयष्टा-

आष्टगोन्तकाः ११९ खाभ्रघस्राभ्रखत्रीणि १२०
घस्रखाश्व्यक्षिखाग्नयः ७५. १२१ मेघसिद्धाब्धि-
खत्रीणि १२२ पोभ्रभांगाभ्रवह्नयः १२३ सोश्वपि-
ण्डाष्टखत्रीणि १२४ देवांकाश्विख भूगुणाः ७६.
१२५ द्व्यद्रिपिण्डार्करामाणि १२६ त्र्यंकषड्द्व्यब्धि-
भूगुणाः १२७ षड्गोम्न्यश्व्यंगभूरामाः १२८ क-
ष्टगोकष्टभूगुणाः ७७.

| | | | | | |
|---|---|---|---|---|---|
| ० | ० | १ | २७६११ | २ | ५५२२२ |
| च- कर्ज्यांशाः | ०।०।० | अंशाः | ०।४२।११ | | १।२४।२२ |
| ३ | ८२८३० | ४ | ११०४३५ | ५ | १३८०३७ |
| | २।६।३३ | | २।४८।४४ | | ३।३०।५४ |
| ६ | १६५६६२ | ७ | १९३२२२ | ८ | २२०८०४ |
| | ४।१३।४ | | ४।५५।१३ | | ५।३७।२२ |
| ९ | २४८३७८ | १० | २७५९४३ | ११ | ३०३४९७ |
| | ६।१९।२९ | | ७।११।३६ | | ७।४३।४२ |
| १२ | ३३१०४० | १३ | ३५८५७१ | १४ | ३८६०८८ |
| | ८।२५।४७ | | ९।७।५१ | | ९।४९।५३ |
| १५ | ४१३५९० | १६ | ४४१०७।७ | १७ | ४६८५४७ |
| | १०।३१।५५ | | ११।१३।५४ | | ११।५५।५३ |
| १८ | ४९६००० | १९ | ५२३४३४ | २० | ५५०८४८ |
| | १२।३७।४९ | | १३।१९।४४ | | १४।१।३७ |
| २१ | ५७८२४१ | २२ | ६०५६१३ | २३ | ६३२९६२ |
| | १४।४३।२९ | | १५।२५।१८ | | १६।७।५ |

| | | | | | |
|---|---|---|---|---|---|
| २४ | ६६०२८७ | २५ | ६८७५८७ | २६ | ७१४८६२ |
| | १६।४८।५० | | १७।३०।२३ | | १८।१२।१३ |
| २७ | ७४२१०९ | २८ | ७६९३२८ | २९ | ७९६५१९ |
| | १८।५३।५१ | | १९।३५।२६ | | २०।१६।५८ |
| ३० | ८२३६७९ | ३१ | ८५०८०९ | ३२ | ८७७९०६ |
| | २०।५८।२८ | | २१।३९।५५ | | २२।२१।२० |
| ३३ | ९०४९७१ | ३४ | ९३२००१ | ३५ | ९५८९९६ |
| | २३।२।४१ | | २३।४३।५८ | | २४।२५।१३ |
| ३६ | ९८५९५५ | ३७ | १०१२८७७ | ३८ | १०३९७६१ |
| | २५।६।२५ | | २५।४७।३३ | | २६।२८।३७ |
| ३९ | १०६६६०६ | ४० | १०९३४११ | ४१ | ११२०१७४ |
| | २७।९।३८ | | २७।५०।३५ | | २८।३१।२९ |
| ४२ | ११४६८९५ | ४३ | ११७३५७३ | ४४ | १२००२०७ |
| | २९।१२।१८ | | २९।५३।४ | | ३०।३३।४६ |
| ४५ | १२२६७९६ | ४६ | १२५३३३८ | ४७ | १२१९८३४ |
| | ३१।१४।२३ | | ३१।५४।५६ | | ३२।३५।२५ |
| ४८ | १३०६२८१ | ४९ | १३३२६७९ | ५० | १३५९०२७ |
| | ३३।१५।५० | | ३३।५६।९ | | ३४।३६।२५ |
| ५१ | १३८५३२३ | ५२ | १४११५६८ | ५३ | १४३७७५९ |
| | ३५।१६।३५ | | ३५।५६।४२ | | ३६।३६।४२ |
| ५४ | १४६३८९६ | ५५ | १४८९९७८ | ५६ | १५१६००४ |
| | ३७।१६।३८ | | ३७।५६।२९ | | ३८।३६।१५ |
| ५७ | १५४१९७३ | ५८ | १५६७८८४ | ५९ | १५९३७३६ |
| | ३९।१५।५६ | | ३९।५५।३२ | | ४०।३५।१ |
| ६० | १६१९५२७ | ६१ | १६४५२५८ | ६२ | १६७०९२७ |
| | ४१।१४।२५ | | ४१।५३।४४ | | ४२।३२।५७ |
| ६३ | १६९६५३३ | ६४ | १७२२०७५ | ६५ | १७४७५५३ |
| | ४३।१२।५ | | ४३।५१।६ | | ४४।३०।२ |
| ६६ | १७७२९६४ | ६७ | १७९८३०९ | ६८ | १८२३५८६ |
| | ४५।८।५१ | | ४५।४७।३५ | | ४६।२६।१२ |
| ६९ | १८४८७९४ | ७० | १८७३९३३ | ७१ | १८९९००१ |
| | ४७।४।४३ | | ४७।४३।७ | | ४८।२१।२५ |

| | | | | | |
|---|---|---|---|---|---|
| ७२ | १९२३९९८ | ७३ | १९४८९२२ | ७४ | १९७३७६३ |
| | ४८।५९।३७ | | ४९।३७।४२ | | ५०।१५।४० |
| ७५ | १९९८५५० | ७६ | २०२३२५१ | ७७ | २० ४७८७६ |
| | ५०।५३।३१ | | ५१।३१।१६ | | ५२।८।५३ |
| ७८ | २०७२४२४ | ७९ | २०९६८९४ | ८० | २१२१२८५ |
| | ५२।४६।२३ | | ५३।२३।४७ | | ५४।१।१० |
| ८१ | २१४५५९७ | ८२ | २१६९८२७ | ८३ | २१९३९७६ |
| | ५४।३८।११ | | ५५।१५।१३ | | ५५।५२।६ |
| ८४ | २२१८०४२ | ८५ | २२४२०२५ | ८६ | २२६५९२३ |
| | ५६।२८।५३ | | ५७।५।३१ | | ५७।४२।२ |
| ८७ | २२८९७३६ | ८८ | २३१३४६३ | ८९ | २३३७१०२ |
| | ५८।१८।२५ | | ५८।५४।४० | | ५९।३०।४७ |
| ९० | २३६०६५४ | ९१ | २३८४११७ | ९२ | २४०७४९० |
| | ६०।६।४६ | | ६०।४२।३७ | | ६१।१८।२० |
| ९३ | २४३०७७२ | ९४ | २४५३९६३ | ९५ | २४७७०६१ |
| | ६१।५३।५४ | | ६२।२९।२० | | ६३।४।३७ |
| ९६ | २५०००६६ | ९७ | २५२२९७७ | ९८ | २५४५७९३ |
| | ६३।३९।४६ | | ६४।१४।४७ | | ६४।४९।३८ |
| ९९ | २५६८५१४ | १०० | २५९११३७ | १०१ | २६१३६६३ |
| | ६५।२४।२१ | | ६५।५८।५५ | | ६६।३३।२० |
| १०२ | २६३६०९१ | १०३ | २६५८४१९ | १०४ | २६८०६४७ |
| | ६७।७।३६ | | ६७।४१।४३ | | ६८।१५।४१ |
| १०५ | २७०२७७४ | १०६ | २७ २४८०० | १०७ | २७४६७२३ |
| | ६८।४९।२९ | | ६९।२३।८ | | ६९।५६।३८ |
| १०८ | २७६८५४३ | १०९ | २७९०२५८ | ११० | २८११८६८ |
| | ७०।२९।५८ | | ७१।३।९ | | ७१।३६।१० |
| १११ | २८३३३७२ | ११२ | २८५४७७० | ११३ | २८७६०६० |
| | ७२।९।१ | | ७२।४१।४३ | | ७३।१४।१४ |
| ११४ | २८९७२४२ | ११५ | २९१८३१५ | ११६ | २९३९२७८ |
| | ७३।४६।३६ | | ७४।१८।४८ | | ७४।५०।५० |
| ११७ | २९६०१३१ | ११८ | २९८०८७१ | ११९ | ३००१५०० |
| | ७५।२२।४१ | | ७५।५४।२३ | | ७६।२५।५४ |

| | | | | | |
|---|---|---|---|---|---|
| १२० | ३०२२०१५ | १२१ | ३०४२४१७ | १२२ | ३०६२७०५ |
| | ७६।५७।१५ | | ७७।२८।२५ | | ७७।५९।२५ |
| १२३ | ३०८२८७७ | १२४ | ३१०२९३३ | १२५ | ३१२२८७२ |
| | ७८।३०।१४ | | ७९।०।५२ | | ७९।३१।२० |
| १२६ | ३१४२६९३ | १२७ | ३१६२३९६ | १२८ | ३१८१९८१ |
| | ८०।१।३६ | | ८०।३१।४४ | | ८१।१।३९ |
| १२९ | ३२०१४४५ | १३० | ३२२०७८९ | १३१ | ३२४००११ |
| | ८१।३१।२३ | | ८२।०।५६ | | ८२।३०।१९ |
| १३२ | ३२५९११२ | १३३ | ३२७८०९० | १३४ | ३२९६९४४ |
| | ८२।५९।३० | | ८३।२८।२९ | | ८३।५७।१८ |
| १३५ | ३३१५६७५ | १३६ | ३३३४२८० | १३७ | ३३५२७६० |
| | ८४।२५।५५ | | ८४।५४।२० | | ८५।२२।३५ |
| १३८ | ३३७१११४ | १३९ | ३३८९३४१ | १४० | ३४०७४४० |
| | ८५।५०।३७ | | ८६।१८।२८ | | ८६।४६।७ |
| १४१ | ३४२५४११ | १४२ | ३४४३२५३ | १४३ | ३४६०९६५ |
| | ८७।१३।३५ | | ८७।४०।५० | | ८८।७।५४ |
| १४४ | ३४७८५४७ | १४५ | ३४९५९९८ | १४६ | ३५१३३१८ |
| | ८८।३४।४६ | | ८९।१।२५ | | ८९।२७।५३ |
| १४७ | ३५३०५०५ | १४८ | ३५४७५५९ | १४९ | ३५६४४८० |
| | ८९।५४।१९ | | ९०।२०।१२ | | ९०।४६।१७ |
| १५० | ३५८१२६६ | १५१ | ३५९७९१८ | १५२ | ३६१४४३४ |
| | ९१।११।४२ | | ९१।३७।९ | | ९२।२।२३ |
| १५३ | ३६३०८१४ | १५४ | ३६४७०५८ | १५५ | ३६६३१६४ |
| | ९२।२७।२४ | | ९२।५२।१३ | | ९३।१६।५० |
| १५६ | ३६७९१३२ | १५७ | ३६९४९६१ | १५८ | ३७१०६५२ |
| | ९३।४१।१४ | | ९४।५।२५ | | ९४।२९।२३ |
| १५९ | ३७२६२०३ | १६० | ३७४१६१३ | १६१ | ३७५६८८३ |
| | ९४।५३।१९ | | ९५।१६।४१ | | ९५।४०।१ |
| १६२ | ३७७२०११ | १६३ | ३७८६९९७ | १६४ | ३८०१८४१ |
| | ९६।३।१८ | | ९६।२६।२ | | ९६।४८।४३ |

| | | | | | |
|---|---|---|---|---|---|
| १६५ | ३८१६५४१ | १६६ | ३८३१०९८ | १६७ | ३८४५५११ |
| | ९७।११।१० | | ९७।३३।२५ | | ९७।५५।२६ |
| १६८ | ३८५९७७९ | १६९ | ३८७३९०१ | १७० | ३८८७८७८ |
| | ९८।१७।१४ | | ९८।३८।४९ | | ९९।०।१० |
| १७१ | ३९०१७०८ | १७२ | ३९१५३९१ | १७३ | ३९२८९२७ |
| | ९९।२१।१८ | | ९९।४२।१२ | | १००।२।५३ |
| १७४ | ३९४२३१६ | १७५ | ३९५५५५५ | १७६ | ३९६८६४६ |
| | १००।२३।२० | | १००।४३।३४ | | १०१।३।३४ |
| १७७ | ३९८१५८७ | १७८ | ३९९४३७८ | १७९ | ४००७०१९ |
| | १०१।२३।२० | | १०१।४२।५३ | | १०२।२।१२ |
| १८० | ४०१९५०९ | १८१ | ४०३१८४८ | १८२ | ४०४४०३५ |
| | १०२।२१।१७ | | १०२।४०।८ | | १०२।५८।४५ |
| १८३ | ४०५६०७० | १८४ | ४०६७९५२ | १८५ | ४०७९६८० |
| | १०३।१७।८ | | १०३।३५।१८ | | १०३।५३।१४ |
| १८६ | ४०९१२५६ | १८७ | ४१०२६७७ | १८८ | ४११३९४४ |
| | १०४।१०।५४ | | १०४।२८।२१ | | १०४।४५।३४ |
| १८९ | ४१२५०५५ | १९० | ४१३६०१२ | १९१ | ४१४६८१३ |
| | १०५।२।३२ | | १०५।१९।१७ | | १०५।३५।४७ |
| १९२ | ४१५७४५८ | १९३ | ४१६७९४६ | १९४ | ४१७८२७८ |
| | १०५।५२।१३ | | १०६।८।४ | | १०६।२३।५१ |
| १९५ | ४१८८४५१ | १९६ | ४१९८४६८ | १९७ | ४२०८३२६ |
| | १०६।३९।२४ | | १०६।५४।४२ | | १०७।९।४६ |
| १९८ | ४२१८०२६ | १९९ | ४२२७५६६ | २०० | ४२३६९४८ |
| | १०७।२४।३५ | | १०७।३९।१० | | १०७।५३।३० |
| २०१ | ४२४६१७१ | २०२ | ४२५५२३३ | २०३ | ४२६४१३५ |
| | १०८।७।३५ | | १०८।२१।२६ | | १०८।३५।२ |
| २०४ | ४२७२८७७ | २०५ | ४२८१४५७ | २०६ | ४२८९८७७ |
| | १०८।४८।२४ | | १०९।१।३० | | १०९।१४।२२ |
| २०७ | ४२९८१३५ | २०८ | ४३०६२३१ | २०९ | ४३१४१६६ |
| | १०९।२६।५९ | | १०९।३९।२१ | | १०९।५१।२९ |
| २१० | ४३२१९३७ | २११ | ४३२९५४६ | २१२ | ४३३६९९२ |
| | ११०।३।२१ | | ११०।१४।५९ | | ११०।२६।२१ |
| २१३ | ४३५१२७५ | २१४ | ४३५१३९४ | २१५ | ४३५८३४९ |
| | ११०।३७।२९ | | ११०।४८।२१ | | ११०।५८।५९ |
| २१६ | ४३६५१४० | २१७ | ४३७१७६१ | २१८ | ४३७८२३० |
| | १११।९।२२ | | १११।१९।२९ | | १११।२९।२२ |

| | | | | | |
|---|---|---|---|---|---|
| २१९ | ४३८४५२७ | २२० | ४३९०६६० | २२१ | ४३९६६२७ |
| | १११।३८।५९ | | १११।४८।२१ | | १११।५७।२८ |
| २२२ | ४४०२४२८ | २२३ | ४४०८०६४ | २२४ | ४४१३५३४ |
| | ११२।६।२० | | ११२।१४।१६ | | ११२।२३।१६ |
| २२५ | ४४१८८३७ | २२६ | ४४२३९७५ | २२७ | ४४२८९४६ |
| | ११२।३१।२४ | | ११२।३९।१५ | | ११२।४६।५१ |
| २२८ | ४४३३७५० | २२९ | ४४३८३८७ | २३० | ४४४२८५७ |
| | ११२।५४।११ | | ११३।१।१६ | | ११३।८।६ |
| २३१ | ४४४७१५९ | २३२ | ४४५१२९४ | २३३ | ४४५५२६२ |
| | ११३।१४।४० | | ११३।२०।५९ | | ११३।२७।३ |
| २३४ | ४४५९०६२ | २३५ | ४४६२६९४ | २३६ | ४४६६१५८ |
| | ११३।३२।५२ | | ११३।३८।२५ | | ११३।४३।४२ |
| २३७ | ४४६९४५४ | २३८ | ४४७२५८१ | २३९ | ४४७५५४० |
| | ११३।४८।४४ | | ११३।५३।३१ | | ११३।५८।२ |
| २४० | ४४७८३३१ | २४१ | ४४८०९५३ | २४२ | ४४८३४०७ |
| | ११४।२।१८ | | ११४।६।१८ | | ११४।१०।३ |
| २४३ | ४४८५६९१ | २४४ | ४४८७८०७ | २४५ | ४४८९७५४ |
| | ११४।१३।३३ | | ११४।१६।४७ | | ११४।१९।४५ |
| २४६ | ४४९१५३२ | २४७ | ४४९३१४० | २४८ | ४४९४५८० |
| | ११४।२२।२८ | | ११४।२४।५६ | | ११४।२७।८ |
| २४९ | ४४९५८५० | २५० | ४४९६९५१ | २५१ | ४४९७८८२ |
| | ११४।२९।४ | | ११४।३०।४५ | | ११४।३२।१० |
| २५२ | ४४९८६४५ | २५३ | ४४९९२३८ | २५४ | ४४९९६६१ |
| | ११४।३३।२० | | ११४।३४।१५ | | ११४।३४।५३ |
| २५५ | ४४९९९१५: | २५६ | .४५००००० | | |
| | ११४।३५।७७ | | ११४।३५।२४।२६।४५ | | |

# अन्त्यकोषज्या.

४५००००० * व्यास

पञ्चवेदाहतलक्ष मत्र विस्तारमीरितम् तद्व्या-

* व्यास ४५००००० वर्ग: २०२५०००००००००००

ज्या     २५६
सोमौर्विकाज्ञेयाषट्तेत्वोन्मितकोष्ठज्ञा ७८

## अथचक्रस्याऽपराष्टमांशज्यानयनम्

भुजांशाः     कोटयंशाः     बाणप्रदांशाः
बाह्वशाः कोटिभागाश्चभागाः सायकदास्तया चक्र
८     ४५     ज्या
स्याऽष्टमभागाऽत्स्याश्चेत्तेषांमौर्विकाबुधैः ७९ वि-
ज्या     भुजकोटिशर     भागाः *
ज्ञेयाकथिताजीवाचेद्दोः कोटयक्षदांशकाः चक्र
८     ४५     ३६     ४     ९०
नागांशकाद्रूर्द्धस्त्ताश्चैकांशार्णवांशके ८० हि-
१३१३०।५२।५
त्वाशेषांऽशकानांचप्रोक्तज्यावर्गवर्जितां चक्रव्या-
सकृतिंकृत्वातन्मूलंमौर्विकाभवेत् ८१ सुखाऽ
१८० चापांशानां
र्थेचक्रखण्डस्यचापज्यापत्रमालिखेत् सर्वेमह्वे
नतांशयन्त्रांशादिगं उन्नतांशादि     भुजांश कोटयंश
लगा भागा नतय न्त्रांशपूर्वकाः ८२ बाहुकोट्य
शरप्रदांशे
क्षदांशाश्चद्विघ्नाश्चापांशकाः स्मृताः

## अथसामान्यज्यांशानयनम्

भु     को     शर
बाहुंशैश्चाथकोटयंशैः किंवा मार्गणदांशकैः ८३
१२८     ४५
अष्टार्कस्ताडिताःपञ्चवेदाप्ताः कोष्टमुच्यते त-

---

* चक्रव्यासः ११४।३५।२४ अस्यवर्गः १३१३०।५२।५ चक्र
व्यासार्द्धम् ५७।१७।४२ चक्रव्यासार्द्धवर्गः ३२८२।४३।१।

त्कोष्टसमकोष्टस्यमौर्वीपट्टे समालिखेत् ८४
कोष्टाऽधः स्थं घटीपूर्वकोष्टयोर्ज्याऽन्तराहतम्
षष्ट्यासंतेनसंयुक्तापट्टस्थाज्यास्फुटा भवेत् ८५
पट्टस्थाज्याद्गौर्निघ्नावेदशून्य भगोगुणैः भाजि-
ताराशिचक्रज्या भागपूर्वास्फुटा भवेत् ८६

## अथ चक्रज्यांशेभ्यो भुजांशानयनम्.

स्यातांगुणाहराऽवशिष्टे भक्तावऽल्पाविज्ञेवतु वेद
शून्य भगोरामैर्निघ्नाश्चक्रज्यकांशकाः ८७ खाभ्रा
सास्तद्भवेत्पट्टमौर्वीतत्पूर्वकोष्टजा ज्याप्राग्ज्याग
दितापट्टपूर्वज्याविवरं भजेत् ८८ पूर्वाऽग्रज्यान्त-
रेणैवलब्धंकोष्टादिकं फलं कोष्टेप्राङ्गौर्विकाया
स्तुयुक्त्वातंखग्रहाहतम् ८९ भक्त्वाषट्तत्व-
भिर्बाहुभागाः स्युस्तेलवास्तया कोटिसंज्ञांशकाः
किम्वाविज्ञेया अस्य दांशकाः ९०

वृत्तस्याऽपराष्टमांशज्यापत्राऽभावश्चे-
दधिकज्यायाः भुजांशानयनार्थमुपायः

वृत्ताऽपराष्टमांशज्यापत्राभावोयदाभवेत् त-
र्हिमध्याऽधिजीवाया वर्गताद्विस्तृतेः कृतौ ९१
हित्वाशेषपदंज्यास्यात्तस्या बाह्वंशवर्जितम् कृ-
त्वाशून्यग्रहं प्रोक्ता दोःकोटीषुप्रदांशकाः ९२

## अथबाणानयनम्.

कोटयंशान्निजदोर्भागान्खांके हित्वाऽक्षदांशकाः
स्युस्तेपरस्परं बाहु कोटयंशाः परिकीर्त्तिताः ९३ ते-
षाम्मार्गणदांशानांजीवांशैः परिवर्ज्जितम् विष्क-
म्भंचक्र भागानांकृत्वाऽर्द्धं स्युश्शरांशकाः ९४

## अथ बाणांशेभ्योन्योन्यज्यार्द्धानयनं कोटिभुजांशानयनंच.

अन्योन्यं भुज कोटयोस्तु स्वस्वज्याशरवर्ज्जित-
म् व्यासाऽर्द्धे परजीवाऽर्द्धं वृत्ते सर्वत्र जायते
९५ द्विघ्नेष्वंशोनिताश्चक्रव्यासांशा ज्याल-
वादिकाः स्यात्तस्यास्तु भुजांशोनाः खांकाः
स्युः कोटिदोर्लवाः ९६

अथराशीनां भुक्तभोग्यांशज्या विज्ञानम्

शून्यभत्रिभयोर्नन्द षड्भयोऽरन्तरेंऽशकाः
खांकाओजपदस्योक्ता स्त्रिभषड्भान्तरेंऽशकाः ९७
अर्कांकाक्षाऽन्तरेभागाः खांकास्तुल्यपदस्यच स्या-
द्दोर्ज्या भुक्तभोग्यांऽशजीवाविषमतुल्ययोः ९८
पदयोर्गतगम्यांशमौर्वीतुल्योजयो भवेत् कोटि-
ज्याचोर्द्ध्वरूपासाराशिचक्रेंऽशकादिका ९९

अथप्रकारांतरेण भुजकर्णाभ्यां कोट्या
नयनं तथाबाहुज्याव्यासाभ्यां कोटिज्या
नयनम् तथाचकोटिज्याव्यासाभ्यां भु-
जज्यानयनम् अत्रजीवाबाहुः कोटिर्वा
व्यासः कर्णः स्यात्

एकस्थानीयतः कर्णवर्गेदोर्दंशसम्मिते स्थानेकं
विलिखेच्चिह्नाऽधः स्थानाद्बाहुमालिखेत् १००
तस्मात्तेन भुजेनैव भक्त्वाबाहुसमंफलम् आ-
नयित्वाहितच्छेषमूलं कोटिरुदीरिता १०१

उदाहरणम् यथाबाहुः १५ कर्णः २५ कर्णवर्गः ६२५ बाहोः स्थान द्वयत्वात्क र्णवर्गस्य द्वितीयस्थाने चिह्नं कृत्वाजातं ६२५ चिह्नाधः स्थानाद्बाहुं भागदानार्थं प्रथमं लिखित्वाजातम् $\frac{625}{15}$ प्रथमांलब्धिमेका १ मानयित्वाजातम् ४७५ ततः बाहुमुत्थाप्य एकस्थानन्यूने स्थाप्यजातम् $\frac{475}{15}$ तत्रद्वितीयांलब्धिंपंचोन्मिता ५ मानयित्वा शेषम् ४०० अस्यमूलंकोटिः २०

## अथ प्रकारान्तरेण

बाहुस्थानसमात्कर्ण वर्गोजाद्दोस्समंपदम् आनयित्वाचतच्छेषमूलंकोटिः प्रकीर्त्तिता १०२

उदाहरणम् यथाबाहुः १५ कर्णः २५ कर्णवर्गः ६२५ अस्मिन्नोजद्वयं भुजस्यापिस्थानद्वयम् तस्माद्धेतोः ६२५ वामौजात्षाण्मितादेकं पद १ मानयित्वा जातम् ५२५ द्विघ्नंपदं २ द्व्यङ्काधोदेशे स्थाप्यजातम् $\frac{525}{2}$ अत्रपञ्चोन्मितां ५

लब्धिमानयित्वाजातम् ४२५ अत्रलब्धेः ५
पञ्चोन्मितायाः वर्ग २५ हतस्यादिविषमा-
त्त्यक्त्वाशेषंकोटिवर्गंजातम् ४०० अस्यमूलं
कोटिः २० एवंकोटिकर्णाभ्यांबाहुः स्यात्
भु
एवंकोटिकर्णाभ्यांभुजानयनम्. कोटिम्बा-
हुरितिज्ञात्वाप्रोक्तवज्ज्ञायतेभुजम्.

### अथ प्रकारान्तरेणज्योपपत्तिः

अथगुप्तप्रकारैस्तुज्योत्पत्तिंकथयाम्यऽहम्
अर्द्धं अर्द्धं
१०३ भोग्यचापदलंकोटिर्भुक्तचापदलंभुजः
५७।१७।४२. भु
ज्ञेयोव्यासदलंमान्यंप्रोक्तंदोर्ज्यादलस्यच १०४
३२८२।४३।१
वर्गंमान्यक्षतौहित्वामूलंतस्यचयद्भवेत् तत्को-
ज्या
टिमौर्विकाखण्डंज्ञेयंसर्वत्रपण्डितैः १०५ अ-
भुजे कोटिः कोटिः कोटि भुजकोटिः
न्योन्यंभुजकोट्योः स्याऽदन्यकोटिः स्वयंभुजः
५७।१७।४२
स्वस्वकोटिज्यकाखण्डंमान्येहित्वाशरोभवेत्
६ ६० खाग्नि ३० भुजांशज्या
१०६ वृत्तषष्ठांशचापज्याव्यासखण्डोन्मिता
५७।१७।४२ ज्या ३ १२०
भवेत् तत्कोटिमौर्विकावृत्तत्र्यंशचापज्यकाभ-

वेत् १०७ ज्यार्द्धानयनम्

बाणवर्गेतुतज्ज्यार्द्धवर्गंयुक्त्वाचतत्पदम् तद्दलं
तद्भुजाऽर्द्धज्याखण्डंस्यान्मान्यबाणयोः १०८
घातार्द्धस्यपदंज्याऽर्द्धं ज्ञेयंतद्बाहुखण्डजम् व्या
सखण्डस्यवर्गाऽर्द्धमूलज्यार्द्धसमभवेत् १०९ दोः
कोटयोर्वृत्तनागांशेष्टहृत्कर्णदलोन्मितं दोर्ज्ययोरि-
ष्टयोर्भेदखण्डवर्गेणसंयुतात् ११० तयोःकोटिज्य
योर्भेदखण्डवर्गाच्चयत्पदम् ज्याभवेद्भुजयोर्भेद
खण्डस्याऽग्रज्यकाचसा १११

## मध्यमध्यज्यार्द्धानयनम्.

पृष्टाऽग्रयोस्तुभुजयोस्तथाकोटयोर्निजेष्टयोः म-
ध्येमध्येचमध्येचमध्येमध्येतयोस्तयोः ११२ इत्थं
समानयेत्सर्वज्याऽर्द्धानिद्विगुणानिच

## अथ स्थूलगुणज्ञानम्

आज्याह्वराऽल्पकोष्ठानासास्यात्स्थूलफलप्रदा
११३.

## अथ भुजज्यातःकोटिज्यानयनम् तथा-
## कोटिज्यातःभुजज्यानयनम्

पट्टे बाहुज्यकां स्थाप्य सादोः पट्टज्यका भवेत् तत्स-
मीपादिकोष्टज्या पूर्वज्या परिकीर्त्तिता ११४ पूर्व-
ज्ययोनिता बाहु पट्टज्या गुणसुच्यते प्राग्ज्योत्था-
न्दोर्ल्लवान्नवांके ह्रित्वा कोटिलवाः स्मृताः ११५ ते-
षां स्थाप्य ज्यकां पट्टे कोटिज्या साऽभिधीयते को-
टिज्यायास्तु पूर्वज्यां कोटिज्यायां परित्यजेत् ११६
साशेषमौर्विका तेन गुणके नैव ताडिता बाहुपट्ट
ज्यकायास्तु पूर्वाऽग्र ज्यान्तरोद्धृता ११७ तल्लब्धे-
नोनिता कोटि ज्याकोटिज्या स्फुटा भवेत् एवं
कोटिगुणोत्पन्नाबाहुज्या प्रस्फुटा भवेत् ११८ दो
र्ज्यया दोर्ल्लवान्नवांके ह्रित्वा कोटिलवाः स्मृताः
तेषाम्मौर्वीतु कोटिज्या तद्बाहु गुणजा भवेत् ११९

## अथ सूक्ष्मज्यानयनम्

प्राक्कोष्टमेककोष्टस्य शून्यं स्यात्तत्फलं वियत् पू-

वर्ऽग्रकोष्टयोर्ज्यैक्यं कोटिघ्नंपरिभाजितम् वेदाश्चा-
कांकगोनन्दगोत्तुंरुच्चज्यका भवेत् एवंसम्पूर्ण
कोष्टानामुच्चज्यानिसमानयेत् १२१ स्वस्वकोष्ट
द्वयोर्मध्येतूच्चाख्यांविन्यसेज्ज्यकाम् ततः को-
ष्टानिजीवायाः स्युर्द्विघ्नप्रमितानिच १२२ बाहुको
ट्यंशजंकोष्टंद्विघ्नंतत्कोष्टमुच्यते ततस्तत्कोष्टजा
जीवासूक्ष्मज्यासमुदीरिता १२३

## अथवृत्तान्तर्गतकोणानयनम्

ययोस्तयोस्तुविश्लेषभागाः कोणांशकाः स्मृताः
चक्रांशाः कोणभागास्ताः कोणसंख्याप्रकीर्त्तिता
१२४ स्युः कोणसंख्ययभक्ताश्चक्रांशाश्चापभाग
काः चापार्द्धांशा भुजांशाः स्युस्तेषांज्यास्याद्भु
जज्यका १२५ बाहुज्यांशाहतंवृत्तचक्रांशासंच
तत्फलम् वृत्तान्तः कोणबाहूनामेकैकस्य मिति-
र्भवेत् १२६ तद्वृत्तान्तः समाभ्यस्त्रेत्सकदास्या
न्महत्ब्रुवः कोटिबाहूऽस्सदांशानांवाचक्रज्याऽर्द्ध

पत्रकम् १२७ सम्विधायसुखाऽर्थन्तुज्याऽर्द्धमेव
फलंततः आनयेच्चपुनर्यत्रलब्धज्याऽर्द्धयमाहत-
म् १२८ कृत्वासामौर्विकाज्ञेयातस्या बाहुंशमान
येत् इत्युक्तंतत्रतल्लब्धंजीवाऽर्द्धम्मौर्विकेतिच १२९
संस्मृत्वाहितंततोबुध्यातज्जीवायास्तुदोर्लवैः तुल्या
जीवाऽर्द्धपत्रोत्था बाहुंशाःस्युर्गुणाऽर्द्धजाः १३०
तद्वद्बाहुज्यकाखण्डात्कोटिज्याऽर्द्धं समानयेत् स-
र्वत्रैवाऽन्त्यकोष्टस्थमाकोष्टंस्यादुपाऽन्तिमम् १३१
कोष्टादुपान्तिमाज्ज्याऽर्द्धं स्वक्रव्यासदलात्त्यजेत्
स्युःक्रमादुत्क्रमज्याऽर्द्धपिण्डास्त्वेकादिकोष्टगाः
१३२ तैर्दोर्ज्यविच्छरंबाहुभागा नामानयेद्बुधः पू
ज्यास्त्रिज्यास्मृताज्याऽर्द्धअन्यग्रंथेषुतुज्यका १३३

श्रीलक्ष्मीवल्लभात्मजप्रेमवल्लभविरचितेपर-
मसिद्धान्तेजीवानयनाधिकारश्चतुर्थः४

